× × ×

यत्कोपं प्रणये विराजति परं वैरं मतेन्यथा ॥ ७—४ ॥

× × ×

प्रायो मिलन्ति विपदः सहसा जनानाम् ॥ ८—३ ॥

× × ×

हर्म्योदरे रतिकथाः कलयन्ति धन्याः ॥ ६—१२ ॥

(h) ***Popularity of Abhinavagitagovindam—***

The scholars all over the country have discussed widely the association of Abhinavagītagovindṃ with Gīta-govindaṃ and the work has attained fame among the lovers of Sanskrit literature. The famous Vaiṣṇava poet Rūpa Gosvāmī (1490-1563 A.D.) was influenced by the lines of Abhinavagītagovindaṃ and included six of its verses in his 'Padyāvalī'[88] an anthological work on the Krisṇāite faith.

| Padyāvali Verse No. | Abhinavagītagovimṇda Canto | Verse |
|---|---|---|
| 48 | 1 | 7 |
| 156 | 1 | 1 |
| 161 | 1 | 12 |
| 220 | 5 | 14 |
| 221 | 6 | 10 |
| 293 | 1 | 6 |

Jagannatha Miśra, (1725-1775 A.D.) a famous rhetorician of Orissa, has also quoted one verse from Abhinava-gītagovindaṃ (Canto III, verse-6) in his Rasakalpadruma.[89]

88. Padyavali—Edited by S. K. De, 1934.
89. Rasakalpadruma—Edited by B. Acharya, P. 33.

**Editorial Note –**

The colophon which contains historical truth and important from the view point of critical study has been appended in this publication. The rāgas that are used in this work along with their characteristics have also been given in the appendix for reference. The names of the cantos and the number of the Prabandhas are arranged for convenience of the readers.

It is regretted that inspite of sincere efforts certain errors in printing have crept in. A correction slip is appended at the end.

Now I on behalf of the Department record my thanks to the authorities of the Utkal University for permitting me to utilise their manuscript available in their liabrary. I am also grateful to the Chief Editor, Prof. Sarbeswar Das for his kind guidance. I am also thankful to Pandita Nīlamani Mishra, curator, Sanskrit studies and Śri Dinanatha Pathi, curator, Art and craft of the Orissa State Museum and Pandita Srinibasa Ratha of the Utkal University, Bhubaneswar for their help and co-operation. My thanks are also due to Śri Suresh Chandra Jena, M.A., L L.B , Asst. Editor and Srimati Chhavilata Devī. B.A. (Hons) who have sincerely prepared the press copy and helped me in this work.

Bhubaneswar.
Akṣaya Tṛtīyā
21. 4. 77.

**Bhagaban Panda**
Editor

# विषयसूची

# अभिनवगीतगोविन्दमहाकाव्यम्

## श्रीगणेशाय नमः

## श्रीराधाकृष्णाभ्यां नमः

## प्रथमः सर्गः

### विधुरराधः

कालिन्दीजलकेलिलोलतरुणीरावीत[1] चीनाम्बरा
निर्गत्याङ्गजलानिसारितवतीरालोक्य सर्वाः दिशः ।
तीरोपान्तमिलन्निकुञ्जभवने गूढं चिरात्पश्यतः
शौरेः सम्भ्रमयन्निमा विजयते साकूतवेणुध्वनिः ॥ १ ॥

यस्याः कृपामृतनिषेकमृते न वर्ण[2]—
वीजानि चित्तभुवि सन्त्यपि निर्मलायाम् ।
नूनं भवन्ति बहुपल्लववन्ति तस्याः
पादौ नमामि वचसामधिदेवतायाः ॥ २ ॥

शृणुत सुकृतमेतां वल्लवी-वल्लभस्य
प्रचुररसनिबद्धां नो खला मामकीनाम् ।
अपि विनमितवक्त्रो गूढमुत्कण्टकोऽयं
सपदि हि विषपुच्छो वृश्चिको हन्ति गाढम् ॥ ३ ॥

निन्दन्तु नितरां खलाः परकृतिं ये प्राक्तनानां स्तुतिं
कुर्वन्तो मुदमुद्वहन्ति न तथा तेषां पुनः सन्निधौ ।
निन्दामात्रपरायणाः[3] प्रतिपदं ये तान्विहायाधुना
संमोदं[4] दधतां सतां परकृतौ तृप्त्यै विधास्ये कृतिम् ॥ ४ ॥

---

1. क. ख तरणीरावीत ।
2. क. मृतेनवर्न्ति ।
3. क. परायणाम् ।
4. क. सम्मोदम् ।

राधा-मुरारि-रमणीय रहस्यलीला—
सन्दोह-सुन्दरममन्द-गुणाभिरामम् ।
साहित्य-सारसमुदाय-बुधः प्रबन्ध—
मेतं[1] तनोति पुरुषोत्तम भूमिभर्त्ता ।। ५ ।।

## प्रथमः प्रबन्धः

( मालवगौड़ारागेण गीयते )

वारिपूरित-गगनकन्दर-जलधिमग्न-महासुरम् ।
शङ्खनामकमाशु जित्वा[2] कलितवेदमनातुरम् ।।
नमत मीन-शरीरमद्भुतमखिलमुनिजन-वन्दितम् ।
जनन-पालन-नाशकारण नीलगिरिपतिमच्युतम् ।।
।। ध्रुवपदमिदम्[3] ।। १ ।।

विपुलगिरिवर-नगरकानन-जलधि-संचयसंचितम् ।
धरणिमण्डलमहह दधतं चरमकायनिवेशितम् ।।
नमतकूर्मशरीरमद्भुतमखिलमुनिजन-वन्दितम् ।
जनन-पालन-नाशकारणनीलगिरिपतिमच्युतम् ।। २ ।।

राहुकवलन-शिष्टशशधरकोटिलीनशशिद्युतिम्[4] ।
जलधिमग्नां दधतमवनीं दशनशेखर-सङ्गतिम् ।।
नमतकोलशरीरमद्भुतमखिलमुनिजन-वन्दितम्
जनन-पालन-नाशकारणनीलगिरिपतिमच्युतम् ।। ३ ।।

रुचिर-किंशुकमुकुलकोटि-विलीनमधुकरमञ्जुलम् ।
दारयन्तमुदग्रनखरालीढ़दितिसुतमतिबलम्[5] ।।
नमत-नरहरिरूपमद्भुतमखिलमुनिजन-वन्दितम् ।
जनन-पालन नाशकारण नीलगिरिपतिमच्युतम् ।। ४ ।।

---

1. क. प्रबन्धः मेतम ।
2. ग. भित्वा ।
3. ख. ध्रुवपदमित्युल्लेखो नास्ति ।
4. ख. ग. शशद्युतिम ।
5. क. ख. दन्तसुतमतिबलम् ।

पादनखरस्पर्शनतुटद्ब्रह्मण्डजात-सुरापगम् ।
मृदुल-चरण-स्पर्शन-क्षणदमितदितिजं सत्रगम् ॥
नमत-वामनरूपमद्भुतमखिलमुनिजन-वन्दितम् ।
जनन-पालन-नाशकारणनीलगिरिपतिमच्युतम् ॥ ५ ॥

धरणिपतिकुलकन्धरोत्थित-रुधिरधाराभिप्लुतम् ।
धरणिमण्डलमनिशसन्ध्या कालमयमिव संहृतम्[1] ॥
नमत-भृगुसुतमद्भुताकृतिमखिलमुनिजन-वन्दितम् ।
जननपालननाशकारणनीलगिरिपतिमच्युतम् ॥ ६ ॥[2]

त्रिदशमुनिगणनाशहेतुं त्रिपुरहरवरदर्पितम् ।
रावणं हत्वा शिरोभिः कन्दुकैरिव खेलितम् ॥
नमत-दशरथतनयमद्भुतमखिलमुनिजनवन्दितम् ।
जनन-पालन-नाशकारण-नीलगिरिपतिमच्युतम् ॥ ७ ॥

लाङ्गलायुधकोटिदर्शित नागसाह्वयघूर्णनम् ।
मुष्टिपातन-विहितमत्र प्रलम्बासुरचूर्णनम् ॥
नमत-हलधररूपमद्भुतमखिलमुनिजन-वन्दितम् ।
जनन-पालन-नाशकारणनीलगिरिपतिमच्युतम् ॥ ८ ॥

गोपगोकुलरक्षणक्षणधारितातुल-भूभृतम् ।
नीलमणिमयदण्डसङ्गतमातपत्रमिवोद्धृतम् ॥
नमत-कंसासुरनिसूदनमखिलमुनिजन-वन्दितम् ।
जनन-पालन-नाशकारणनीलगिरिपतिमच्युतम् ॥ ९ ॥

तुरगखुरपुटबल[3]धरा[4]तलमतुलखड्गविखण्डितम् ।
म्लेच्छकुलगल[5]नालमविकलमाशु येन सुसंहितम् ॥

---

1. क. संधितम् । ख. संहितम् ।
2. ख. स्तोत्रोऽय सप्तमावताररूपेण उल्लिखितः ।
3. ख ग दल ।
4. क. ख. ग दिला ।
5. क. मल । ग. खल ।

नमत-कठिनमुग्रमद्भुतमखिलमुनिजन-वन्दितम् ।
जनन-पालन-नाशकारणनीलगिरिपतिमच्युतम् ॥ १० ॥

नीलगिरिपति-चरणसरसिजमत्तमधुकररूपिणा ।
रचितमेतत्पूरुषोत्तम[1] भूभुजामतिचारुणा ॥
नमत-दशविधरूपमद्भुतमखिलमुनिजन वन्दितम् ।
जनन-पालन-नाशकारणनीलगिरिपतिमच्युतम् ॥ ११ ॥

गोपीजनालिङ्गितमध्यभागं
वेणुं धमन्तं भृशलोलनेत्रम् ।
कलेवरे प्रस्फुटरोमवृन्दं
नमामि कृष्णं जगदेककन्दम् ॥ ६ ॥

अधरे विनिहित वंशं चम्पककुसुमेन विरचितोत्तंसम् ।
विनतं धमन्तमंसं[2] वामं सततं भजामि[3] जितकंसम् ॥ ७ ॥

## द्वितीयः प्रबन्धः

(गुज्जरी-रागेण गीयते)

सुललित-बर्हिण-चन्द्रकचूलम् ।
तदधरपरिवृतनववनमालम् ॥
मृगमदतिलक-चटुलतरभालम् ।
परिहिततनुतरपीतनिचोलम् ॥
कुसुमितनीपविटपितलमिलितम् ।
नमत-मुरलिमृदुवादननिरतम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

श्रुतियुगविगलितकुण्डलयुगलम् ।
मणिगणभूषितमृदुगलनालम् ॥

---

1. क. ख. पुरुषोत्तम ।
2. क. ग धरन्तमंसम् ।
3. ख. ग. नमामि ।

कौस्तुभशोभित पृथुतर हृदयम् ।
मलयजपङ्कविलेपितकायम् ॥ २ ॥

सरुचिरकङ्कण-शुभमणिबन्धम् ।
देहलताहित-शशधरगन्धम् ॥
मणिगणकाञ्चिसुभञ्चितमासम् ।
तरुणसुधाकरसुन्दरहासम् ॥ ३ ॥

नूपुररणित[1] मनोहरलीलम् ।
गोपीनयननिपातनलोलम् ॥
नरहरिचरणसरोरुहयुगलम् ।
भजत नृपतिगजपतिरतिविमलम् ॥ ४ ॥

केतकीमुकुल-काञ्चन-यष्टि-गन्धलुब्धमधुपावलिरेषा[2] ।
विभ्रति मनसिज-क्षितिभर्त्तु राजतीव जयनीलपताका ॥ ८ ॥

केतक्या मुकुलेऽत्रसौरभवशाद्भृङ्गावली सङ्गता
चक्राकारतया यदेतदभितः सान्द्रा दरीदृश्यते[3] ।
तन्मन्ये स्मरभूपते र्वैजयिनः सौवर्णदण्डोज्ज्वलं
छत्रं केलिकलापसंघरचितं पुष्पाकरेण स्वयम् ॥ ६ ॥

## तृतीयः प्रबन्धः

(वसन्तरागेण गीयते)

नवघनविपिने कोकिलकलरव-शवलितमधुरमधुपरुते ।
वहति सुरभिरतिशयमृतुरुदितो युवजनहृदयमनारतम् ॥
॥ ध्रुवपदमिदम् ॥

सुरुचिरयमुनातटनिकट-स्थितकुसुमितविविधमहीरुहे ॥ १ ॥
मलयपवन-चन्दननवदल धृतगुरुरोषसकम्पाधरपुटे ॥ २ ॥

---

1. क ललित ।
2. ग मधुपावलिमेषा ।
3. क. तरीदृश्यते ।

दरविकसितसहकारमुकुल कुलकपटकलितमदनाशुगे ॥ ३ ॥
गजपतिपुरुषोत्तमरचितमिदं सुखयतु नीलाचलपतिम् ॥ ४ ॥

इह हरिविरहविषण्णामागच्छन्तीं मनोजकृतबाधाम् ।
राधामालोक्य सखी तदिङ्गितज्ञानकोविदा प्रोचे ॥ १० ॥

## चतुर्थः प्रबन्धः

( गोण्डकिरीरागेण गीयते )

मन्थरागतिरधिकशून्यमालोकते
प्रखरनिःश्वसितचलकुचयुगलचेला ।
किमपि भावयति हृदविलुलदधर—
पल्लवामृदुतनुरुहह[1] परिगलितनिजहेला ॥
नूनमेषा मदनशरपतनदूना
नन्दतनये सखी मम सततलीना ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

तारकाहारकरकातुहिनभानवो
नियत[2]मनुकुर्वते तनुरचिरकान्तिम् ।
नीपकोरकसदृशरोमततिराजिता-
स्फुटमिवावहति बहुमदनशरपङ्क्तिम् ॥ २ ॥

किं मुधा चिन्तया सेयमधियौवना
काल इव जृम्भते विरहिजनदाही ।
ऋतुरयं माधवो नन्दतनयोऽपि
यन्मनसि संवमति वा रुचिररुचिवाही ॥ ३ ॥

कुसुमसुकुमारतनुरियमपि नवाङ्गना
विरहमतिदारुणं केन सहतां वा ।
मनसि संवसतु पुरुषोत्तम—
क्ष्माभुजो नीलगिरिवासिने गीतकृतसेवा ॥ ४ ॥

---

1. ख मृदिततनुरुहह ।
2. ख. नित्य ।

अथ सविभ्रमुपेतां राधिकां सा वयस्या
सखि किमिदमकाण्डे पाण्डिमा गण्डयोस्ते ।
तनुरति तनिमानं याति न स्थैर्यमेषा
गतिरपि समुपेतोत्याचचक्षे मिथस्ताम् ॥ ११ ॥

मनोगतां मन्मथबाणबाधा—
मावेदयन्तीव तनोर्विकारैः[1] ।
दीनानना वाचमुवाच राधा
तदा तदालोजनसम्मुखे सा ॥ १२ ॥

## पञ्चमः प्रबन्धः

( रामकिरीरागेण[2] गीयते )

असितसरसिजगन्धलम्पटभृङ्गवेशम् ।
कुटिलकुन्तलवेणीशोभितचरमदेशम् ।
दधतमविरतमर्द्धशशधर चारुभालम्[3] ।
कामकार्म्मुकरम्यचञ्चलचिल्लिमालम् ॥
सखि विलोक्य विलासलम्पटमागताहम् ।
नन्दनन्दनमसमशरशरजातमोहम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

लम्बिमुक्ताफलमनोहरनासिकान्तम् ।
मध्यसङ्गततरलतारकचन्द्रकान्तम् ।
वन्धुजीवाधरनिवेशितवेणुदण्डम्[4] ।
चलितकुण्डलयुगलशशिरुचिरगण्डम् ॥ २ ॥

मसृणमलयजपङ्कलेपित सकलकायम् ।
विपुलवक्षोहारिकौस्तुभरुचिनिकायम् ।

---

1. क. दतनोर्विकारैः ।
2. ग. रामकेरी रागेण ।
3. ख. गरुड़भालम् ।
4. ख वेणुहस्तम् ।

कनकगिरिसममध्यसङ्गतकाञ्चिमालम ।
गगनमण्डलविचरदुडुगणहासिहेलम् ॥ ३ ॥

गोपबालसमूहसङ्गतकेलिलोलम् ।
पद्मकाननमध्यविलसित-हंसलीलम् ।
युवतिमानससारतस्कररूपशीलम् ।
नमति गजपतिरघविनाशननन्दबालम् ॥ ४ ॥

मलयजघनसारस्फारभीतांशुरोचि—
र्मृदुमरुदुपचारामङ्गसङ्गं स्पृशन्तः ।
मम सखीमुखमुच्चैर्ये पुरा तन्वते ते
हतविधिपरिपाकेनाधुना तापयन्ति ॥ १३ ॥

## षष्ठः प्रबन्धः

( नाद—रामकिरीरागेण[1] गीयते )

मलयजपङ्कविलेपनमनिशं[2] पुटपाकाधिकदाहकरम् ।
व्यथयति शिशिरकरोऽपि मदङ्गं वत विनिहितगुरुपादभरम् ॥
॥ ध्रुवपदमिदम् ॥

सखि ! किमशरणा मरणे नियतं भाविनि विदधे कामकृते ।
प्रतिकर्त्तुं यदि किं च न कलये[3] तदपि विकारं रुतनुते ॥ १ ॥

श्रुतिसुखदं पिकपञ्चमनादं यं च भजे गुरुमानमिदम् ।
स्मरदहने स हि भवति जीव हविरभिचाराहुतिमन्त्रपदम् ॥ २ ॥

अविरलविगलदमन्दपरागं[4] यं प्रविलोके कुसुमगतम् ।
उदयति स नयनपातविरोधिखररुचिकिरणकणोपमितम् ॥ ३ ॥

---

1. ग. रामकेरी रागेण ।
2. क. मधिकं ।
3. ख. किञ्चिन ।
4. ख. विमलदमन्दपरागम् ।

इति विरहातुरराधावचनं नृपपुरुषोत्तमगीतकृतम् ।
नीलाचलनिलयं[1] जगदीशं सुखयतु वल्लवदेहभृतम् ॥ ४ ॥

कालो वसन्तो नवयौवनाहं
लज्जाविशेषो मदनस्य पीड़ा[2] ।
जने दुरापे महती स्पृहा मे
न कोऽप्युपायः सखि जीवनाय[3] ॥ १४ ॥

तदुच्चत्करुणां वाचमित्थमाकर्ण्य[4] सा तदा ।
सखी समक्षं राधाया इदमूचे विचक्षणा ॥ १५ ॥

न काचिच्चिन्ता ते भवतु[5] सखि धैर्यव्ययकरी
पुरः प्राणत्राणं दयितमधिगन्तुं समुचितम् ।
घनाम्भोभिः सिक्ता क्वचिदपि हलाग्रेण दलिता
विना वीजैर्भूमिः फलमभिमतं नो जनयति ॥ १६ ॥

अथ सा तद्वचनान्ते श्वासानधिकान्मुहुर्विमुञ्चन्ती ।
ऊचे सखि समक्षं दिनमुखी शोकगद्गदां वाणीम् ॥ १७ ॥

## सप्तमः प्रबन्धः

( भैरवीरागेण[6] गीयते )

विरहा सीमन्तिनी मारणे कारणं निजकुसुमबाणम् ।
मयि विमुञ्चति रुषा सन्ततं मन्मथोऽविदितगुरुसारपरिमाणम् ॥
किं मया सखी विधेयम् ।
नन्दनन्दनकृते जीवनं देयम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

---

1. क निलय ।
2. क पीवा ।
3. ख. जीवनाथ ।
4. क वाचमिदमाकर्ण्य ।
5. क. भवती ।
6. ख. भैरवरागेण ।

हरनयनघनदहनभस्मिते प्रेतमात्रं गते का वा ।
तत्र करुणा भवति दारुणे तव मे फलति नहि सततमपि सेवा ॥ २ ॥

दुरितपरिपाकमनुयायिनी दुर्दशा समुपैति[1] सैषा ।
कुसुममपि कुलिशमिव नन्वती तत्र मम जीवनेन सकृदपि काशा[2] ॥ ३ ॥

नीलगिरिपतिरचितसङ्गता नृपति पुरुषोत्तमे नेयम्[3] ।
विरचिता गीति रसानुमोदिनी[4] भावयतु सततं[5] सुखमपरिमेयम् ॥ ४ ॥

ये सखी सुखमादधते जगति पदार्था जनस्य सकलस्य ।
ते यदि विपरीतार्थं भजन्ति का जीवनाशा मे ॥ १८ ॥

## अष्टमः प्रबन्धः

(मालवगौड़-रागेण गीयते)

मम वपुरन्तरुपेता,[6] गाढं मलयजवाता ।
अधुना जीवनमेते, प्रसभं क्वापि नयन्ते ॥

अभिनवमदनमुदारं, त्रिभुवनयुवजनसारम् ।
याचे मुहुरिह दीना, सखि तं भवतीं पदलीना ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

यस्य दृगञ्चललीला, मदनमनोरमखेला ।
आकर्षति ममचित्तं, रज्जुवदिदमनिमित्तम् ॥ २ ॥

यदतनुतनुपरभागं, कल्पित विविधभागम् ।
न च पुनरवलोकेऽहं, यदि विजहाम्यपि देहम् ॥ ३ ॥

---

1. क ग. समुदयति ।
2. ख. कासा ।
3. क. पुरुषोत्तमेयम् ।
4. ख. रसुमोदिनी ।
5. क. भावयन्ति सन्ततं ।
6. क. वपुरतिरुपेता ।

गभीविरहनिबद्धं, पुररिपुचरितविशङ्कम् ।
नृपपुरुषोत्तमगीतं, सुखयतु हृदि समुदितम्[1] ॥ ४ ॥

मनोजन्मा धन्वी गिरिशहृदयोन्मादनकृतो[2]
रुषा चापे बाणाननवरतमुत्पुङ्खयति चेत् ।
वराग्ये तत्किं स्यादहह निरुपाये मयि जने
विधेयं नादेयं परमिह मया जीवनमिदम् ॥ १९ ॥

अथातुरां[3] तामधिगत्य राधिका—
मनन्यकृत्यान्तरशान्तिविक्रियाम् ।
उदीत तत्प्राणविपर्य्ययव्यथा
सखी समाश्वासयितुं जगाद सा ॥ २० ॥

विरहमनुभवन्तीमन्तिके त्वां दृगन्त
स्थिरविनिहिततारं माधवस्त्वामपश्यत् ।
न तदिति सखि चिन्ता सन्ततं त्वं दधीथाः
परिहरति चकोरः किं शरच्चन्द्रकान्तिम् ॥ २१ ॥

इति श्रीपुरुषोत्तमदेवगजपतिमहाराजकृतेऽभिनवगीतगोविन्दे
महाकाव्ये विरहिणीवर्णने विधुरराधो
नाम प्रथमः सर्गः[4] ।

---

1. क. ये सखिसुखमादधते इत्यारभ्य हृदि समुदितमित्यन्तं यावत्
पुस्तकेऽस्मिन् नास्ति ।
2. ख. धन्मि गिरिशहृदयोन्माथनकृतो ।
3. क. ख. अथान्तरां ।
4. ख. राधाकृष्णाभ्यां नम इत्यधिकलेखोऽस्ति ।

# द्वितीयः सर्गः

## सोत्कण्ठवैकुण्ठः

स चरतां[1] पृथु मन्मथव्यथा—
मथ राधामवलोक्य माधवः ।
रहसि व्यथमानमानसो
विललापानुभवन्मनो रुजम् ॥ १ ॥

### नवमः प्रबन्धः

(कलहंसरागेण गीयते[2])

कुसुमसञ्चयचारुकबरीभारशोभा ।
हरिहरि तारकायुतगगनमण्डलमंजुलाभा ॥
मृगमदाहितिलकसुललितभाललीला ।
हरिहरि मदननृपजयफलकपरिकलनैकशीला ॥
सुन्दरीमामचलतारं मन्दमन्दम् ।
हरिहरि लोकयन्ती निर्गता साविकृतिकन्दम् ॥
॥ ध्रुवपदमिदम् ॥ १

मयि तदाननलोकनाहितनयनकोणे ।
हरिहरि विशिखमपि सकलं विमुञ्चति पञ्चबाणे ॥
सपदि रिक्ततदीयतूणीररुचिविलासा[3] ।
हरिहरि लसति यत्तिलकुसुमसुषमानुपमनासा ॥ २ ॥
यदतिचञ्चललोचनालोकनसलज्जा ।
हरिहरि वसति हरिणी विपिनभुवि किं वत[4] सुसज्जा ॥

1. ख. सचरतां ।
2. ख रागोल्लेखो नास्ति ।
   ग. कलहंसरागेण ।
3. क. रुचि विकालासा ।
4. ख. तव । ग. व्रत ।

चामरकुञ्चितकचभरशोभायानलोलम् ।
हरिहरि कम्बुरम्य[1]कुटिलकन्धरं कलयमंऽलम् ॥ ३ ॥

मम यदाननचन्द्रममुदितहासभासा ।
हरिहरि हृदयकमलं मुकुलितं वलते तदाशा ॥
मञ्जुगजपतिपुरुषोत्तमभूपतिगीतम् ।
हरिहरि जनयतादिदमाशुचित्तं सुखपरीतम् ॥ ४ ॥

द्वित्राणि कृच्छ्रं पुरतः क्षिपन्ती
पदानि तन्वी स्थिरदृष्टिभङ्ग्या ।
व्यावृत्य नीलोत्पलपत्रदाम्ना
मनोजकेलौ वृणुते स्म किं माम् ॥ २ ॥

## दशमः प्रबन्धः

( भूपालरागेण गीयते )

मधुरमन्दविकारं दधती लोकनसम्भारम् ।
सा मयि वलदभिलाषविलासम् ।
विलसदपाङ्गतरङ्गिततारम् ॥
वलयितवदनसुधाकरम् ।
गलितहृदयधृतिसारम् ॥
स्मरगुरुसदुपदेशसविशेषा ।
हितनिजभावमतनुतोदारम् ॥
॥ ध्रुवपदमेदम् ॥ १ ॥

सादरमिव कलयन्ती मृदुलाशोकविटपमागम् ।
किञ्चिदुदञ्चितबाहावलीप्रकटितपृथुकुचतटपरभागम् ॥ २ ॥

प्रतितनुदेशविशेषे खेलनमन्तं मम चित्तम् ।
हाव[2]विभावितनाभीकूपे सुदृशो मग्नमभूदनुवृत्तम् ॥ ३ ॥

---

1. क. कम्बुरुत्तर ।
2. ख. हार ।

सा विगता मृदुचेला स्फुटतनुलोमलता बाला ।
नीलाचलपतिमुदमातनुते नृपपुरुषोत्तमकविता लीला ॥ ४ ॥

स्वान्तं हन्त विवेकबोधविधुरं चिन्ता दुरन्ता तनोः
कार्श्यः पञ्चशरीकृशानु[1]सुभगारम्भे प्रियं भावुकः ।
पुष्पेषोः सहजाश्च मन्मथकलाव्याकारिणो विभ्रमा-
स्तस्या मर्मभिदो भवन्ति तदहो जीवः कथं वर्त्तताम् ॥ ३ ॥

तामेवेक्षणमीक्षते श्रवणयोस्तद्वाचि वृत्तिः परं
तद्बिम्बाधरमाधुरीपरिचयं धत्ते रसज्ञा मम ।
तद्वक्त्राम्बुजसौरभं कलयते नासापरिष्वङ्गिणी
त्वक् तस्या हृदयं च तत्र यदि किं कामोऽपि वामायते ॥ ४ ॥

कौटिल्यं चिकुरे दृशोश्चपलता बिम्बाधरे रागिता
काठिन्यं हरिणीदृशः कुचयुगे दैन्यं तथा मध्यमे ।
तन्व्यामुत्पथगामिता मलिनता रोमावली चेदहो
तत्केनाङ्गगुणेन तत्र वलते स्वान्तं नितान्तं मम ॥ ५ ॥

## एकादशः प्रबन्धः

( बहुलारागेण[2] गीयते )

चन्द्रचन्दनमन्दमलयगिरिमारुता ।
भिन्दन्ति मम हृदयमीषदपि सङ्गताः ॥
मुकुलकुलविलसदलिपटल—
झङ्कारा दहन्ति मल्लीलोकिता ।
विलसदभिरामतरमाकन्दमण्डली—
गलदतनुमकरन्दरसपानमुदिता ।
चटुलपञ्चमगिरा मोहयन्ति मानसं
हतविधेरहह मम सन्ततं परभृता ॥

---

1. क. कुसीद ।
2. क. ख. ग. बहुली रागेण ।

तदधुना तुदति सततम् ।
गायति ललितरसवलितकामिनीवृत्तम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

सुतनुतनुमेवनोदिव कलितमत्सरं ।
मदनममुमविशेषबोधविबुधं परम ।
वेद्मि तदवयवकृतलोकनयनं ।
तदधुना वलितादरम् ।
नियतमपहाय मम हृदयमपगलदयं ।
भृशमपराधिनी निजजनकमपि गतदयम् ॥
श्रुतिसविधगमितगुण चापसर—
दिषुणा पीड़यति विरहिजनरोषणो हृद्मयम् ॥ २ ॥

चूतनूतनचारुमुकुलततिरुद्गता
पीड़यति किञ्चिदपिनयनपथमागता ।
यदिह भुवि सुखजनकमन्यदपि कान्तं ।
तदपि संदहति चित्तम् ।
यदपि मम सहजनितमिदमहमानसं ।
तदधुना नियतमपहाय मामतिकृशम् ।
भजति केवलमचिरलोकितामबला—
मनवगत तदुपचितभावमाहितरसम् ॥ ३ ॥

मरुदयं खलु जगत्प्राणतामुपगतो
दक्षिणोऽपि हि वपुषि मामके परिगतो ।
निजजननसम्भवामसुपवनपालिं ।
पीड़यति कथमेव मे ।

भणति रसवलितनवगीतमिति मुरहरे
तदति [1]सुन्दरचरणकमलरसमधुकरे ।

---

1. ख. तदिति ।

निशि निशमय मृग्यमनिशमधिकं तनुना—
पथिकलतया सेदं नृपतिपुरुषोत्तमे ॥ ५ ॥

इति बहुविधमन्तं कान्तमेकान्तकुञ्जे
मधुमथनमुपेत्य प्रीतिमुद्रामयन्ति ।
प्रतिमुहुरुदयन्तीं मन्मथोन्माथबाधा—
मकथयदथ तस्यां राधिकायां वयस्या ॥ ६ ॥

## द्वादशः प्रबन्धः

( सौराष्ट्रगुर्जरीरागेण गीयते )

रूपमेव विलिखति सा तव चकितचकितं वीक्षते ।
स्थातुमिच्छति संमुखे तव केलिधामनि न रमते ॥
तव मुखाम्बुजवीक्षणक्षणबहुविकारावेशिता ।
सततमनसिजबाणसम्भवगदबहुताशनपीडिता ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

कुचयुगे निःश्वसितमरुतामलिनीमानं कलयते ।
सविध संचरदालिवृन्दं[1] मन्दमपि न विलोकते ॥ २ ॥

पश्यति त्वामेव परितो झटिति बोधवशंगता ।
भ्रमति रोदिति-वर्जितलज्जा त्वदभिसरणसुसज्जिता ॥ ३ ॥

स्वप्न भव भवदङ्गसङ्गसुखं सखीं प्रतिभाषते ।
पुरुषोत्तमनृपतिकृतहरिचरितगीतं विजयते ॥ ४ ॥

प्रत्यागमाशानिशयानुबद्ध[2]—
रूपं स्वरूपं समवेक्ष्य कान्तम् ।
भवन्तमाराद्नुसृत्य राधा
निवर्त्तते तीव्रमुदीनबाधा ॥ ७ ॥

---

1. क. सविधसंचददालिवृन्दं ।
2. ख. प्रत्याशमाशानिशयानिबद्ध ।

## त्रयोदशः प्रबन्धः

( ललितरागेण गीयते )

मलयपवनमृदुचञ्चलपल्लव-विकसितभूरुहजातम् ।
मधुकृतमदवशमधुकरझंकृति-शङ्कितयुवजनचित्तम् ॥
वृन्दावनमनु सा, राधाभिलषति तव तनुसङ्गम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

त्वदमितगुणपरिचिन्तनलालस-मानसवृत्तिविशेषा ।
विघटितसकलविषयपरिसङ्गतिरपगतभोजनवेशा ॥ २ ॥

समुदितशशधरविम्बमुदञ्चितरुचिमिव हुतवहपिण्डम् ।
कलयति विरहभरादथ धावति तमनुसृता वत चण्डम् ॥ ३ ॥

कुसुमविशिखजनितामय-तारण-कारणमिह भवसि त्वम् ।
गजपतिनृपपुरुषोत्तमगीतं जनयति हृदि रसिकत्वम् ॥ ४ ॥

श्वासान्मुञ्चति मन्दचन्दनमरुत्सङ्गे कुरङ्गेक्षणा
पश्यन्ती मकरन्दविन्दुमवनौ वाष्पाम्बुना सिञ्चति ।
किंचोदञ्चितपञ्चमस्वरभरं श्रुत्वा पिकानां रुतं
कर्णौ सा पिदधाति नैव विरहे कुत्रापि धत्ते रतिम् ॥ ८ ॥

## चतुर्दशः प्रबन्धः

(नारायणीगौड़ारागेण गीयते)

चूततरुनवमुकुललोकने विधुरा ।
सा निमीलयति निजलोचनेऽधीरा
अङ्गसङ्गीनमुदित शशिकिरणसहम् ।
परिहरति सपदि[1] गुरुजनिततनुदाहम् ॥

---

1. क. सर्पति ।

मदनकदनामयं क्षणमपि न सहते ।
मरणमेव हि परं सुमग कामयते ॥
॥ ध्रुवपदमिदम ॥ १ ॥

कुसुमगलदलिते वहलमधुरमधुवलिते ।
वहति[1] चन्दनवनामोदभरभरितें ॥
अङ्गसङ्गिनि मरुति दक्षिणे वामा ।
मोहमुपयाति हतविधिविहितकामा[2] ॥ २ ॥

छायाजनितभवदनुसरणरसया ।
सपदिमुदिता विरलपुलकितनिजया ॥
त्वदवयवसङ्गसुखमनवकलयन्ती ।
क्वासि दयेतेति शुचमेति विलपन्ती ॥ ३ ॥

विरहहुतवहमहह कथमुदितमबला ।
नावकलये सखी वहति सा सरला ॥
नृपतिपुरुषोत्तमेनेदमुपरचितम् ।
नन्दयतु नीलगिरिपतिरचितगीतम ॥ ४ ॥

कण्ठे जीवं करकिशलये[3] गण्डपालिं दधाना
ध्यानं नित्यं वपुषि शकले[4] क्षामतां पाण्डुतां च ।
ग्लानिं विम्बाधरकिशलये लोचने वाष्पपूरं
तिष्ठत्येषा मम सहचरी किन्तु चित्ते भवन्तम् ॥ ६ ॥

## पञ्चदशः प्रबन्धः

(मुखारीरागेण गीयते)

तमसि घने प्रथमाने दुरितवेशनिधानम् ।
विदधाना बहुमनुते[5] न गहनमपि पन्थानम् ।

---

1. क. वहति वर्हति ।
2. ख. निहितकामा ।
3. ख. करसरसिजे ।
4. ख. सकले ।
5. क. बहुतमनुते ।

सा मृदुला परमबला कामयते तव सङ्गम् ।।
।। ध्रुवपदमिदम् ।। १ ।।

स्मरविवशा प्रणयिसखीं पृच्छति रजनीमानम् ।
उपगन्तुं केलिगृहं निश्चितमवदुपयानम् ।। २ ।।

अभिसरणे निहितमतिं तामवकलय नितान्तम् ।
भव शरणं तदुपवनं सरभसमनुसर कान्तम् ।। ३ ।।

भणति शुभं गीतमिदं नृपपुरुषोत्तमदेवे ।
जगदखिलं मोदयते कृतहरिपदयुगसेवे ।। ४ ।।

प्रतिमुहुरुदयन्तीं मन्मथोन्माथवार्ता
मुररिपुरिति तथ्यां राधिकाया निशम्य ।
उपगमयितुमारादात्मनः सन्निधिं तां
मधुरगिरमुदीर्य्य प्राहिणोत्तद्वयस्याम् ।। १० ।।

इति श्रीपुरुषोत्तमदेवगजपतिमहाराजकृतेऽभिनवगीतगोविन्दे
महाकाव्ये नायिकाभिलाषवर्णने[1] सोत्कण्ठवैकुण्ठो
नाम द्वितीयः सर्गः ।

1. ख. विलास ।

# तृतीयः सर्गः

## मुदितराधः

अथ निजमवने राधानुभूय बाधामनङ्गदहनोत्थाम् ।
वलमानचित्तखेदं निशि निर्वेदं चकारोच्चैः ॥ १ ॥

### षोड़शः प्रबन्धः

( वङ्गालगौड़ारागेण[1] गीयते )

मलयजपवने प्रसरति मदने मुञ्चति बाणनिकायम् ।
मिलति न दयिते[2] करुणाविरहिते कथमवलम्बे कायम् ।
न लभे वत कामम् । एकं गतमवकलये यामम्[3] ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

अनुकृतमणिते मधुकररणिते अतिसुखमवरुन्धाने ।
अभवदभिमुखो यदि सा न सखी किमिह तदनुसन्धाने ॥ २ ॥

विचकेलकुसुमं समुदितसुषमं[4] मरुदुपनयति विकाशम् ।
पथि तिमिरघने दयितो[5] विजने मम न किमेति सकाशम् ॥ ३ ॥

परमिह शरणं लघु मम मरणं न सहे विरहमुदीनम् ।
सुखयतु रसिकं[6] जनयतु भविकं[7] नृपपुरुषोत्तमगीतम् ॥ ४ ॥

---

1. ख. वङ्गालवराड़ि ।
2. क. मिलनिर्दयिते ।
3. क. त्तामम ।
4. क. समुदितसुपर्मामत्युल्लेखोनारित ।
5. ख. दयिते ।
6. क. मुखयनिरसिकम ।
7. क. जनयनि भविकम ।

सरसिजकुसुमकुहरे निवसन्मधुपायिनां निकरः ।
तव जयते मन्ननं मामवतां झङ्कारहुंकृतिभिः ॥ २ ॥

मा सखीं सरभसं समुपेता
स्वीय सद्मनि रहो निवसन्तीम् ।
राधिकां प्रति मनोभवबाधां
माधवस्य निजगाद दुरन्ताम् ॥ ३ ॥

## सप्तदशः प्रबन्धः

( शुद्धवसन्तरागेण गीयते )

किशलयशयने विनिहिततनुरपि न परिजहाति सन्तापम् ।
त्वमिह कुसुमशरविवशा भवसीति कलयते परितापम् ॥

उपकुरु दयिततमम्[1] । सखि ! सुन्दरमभिसर पूरय गुरुकामम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

विमलनीलमणिललितकलेवररुचिरमपि[2] विरहे वलमानम् ।
द्विरददन्तनवकृन्तनकान्तिविकाशं नयते तनिमानम् ॥ २ ॥

अविचलमविकलकनकाचलमिव हृदं[3] जलनिधिगम्भीरम् ।
भ्रमिमिव[4] मरुता मधुना चपलं कलयति विलपति सधीरम्[5] ॥ ३ ॥

क्षणमपिमनुते युगमिव सहते सकृदपि न मदनपरिभावम्[6] ।
नृपपुरुषोत्तमकृतमिति गीतं जनयतु मुरजितहृदि भावम् ॥ ४ ॥

---

1. क. दैततमम् ।
2. क. रुचिमपि ।
3. ख. हृदयम् ।
4. क. भ्रममिव ।
5. क. शधीरम् ।
   ख. चाधीरम् ।
6. ख. सकृदपरिभाषम् ।

घनतरमकरन्दस्यन्दसम्पातमान्द्या
प्रणयति बकुलानां पल्लवं तल्पमल्पम् ।
भवति च परितापे कल्पतेऽनन्यगम्या
रचयति तव वृत्तिं हन्त तारस्वरेण ॥ ४ ॥

नमते जपति चिन्तयति त्वां
त्वत्कथासु रमते त्वयि माधव ।
केवलं कलयते त्वदृतेऽन्य—
न्न प्रियः समनुते पुरुषार्थम् ॥ ५ ॥

## अष्टादशः प्रबन्धः

( मालश्रीरागेण गीयते )

श्रवणपथमनुविशति पिकनिकरकूजिते[1]
मधुरवचनामृतं सुमुखि ते मनुते ।
उदितं शशिबिम्बमवलोकयन् सपदि ते
मुखकमलशङ्कया चुम्बितुं[2] यतते ॥

कुसुमशरनिकरपातपरिपीडितम् ।
सखि तमवकलय तव हृदयगतकान्तम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

सरसि विकसितविमलनीलसरसिजदलम्
तव नयनसंशयादनुसरति लोलम् ।

चिन्तया स भवतीं सविधमिलितामलम्
भावयन्ननुनयति नियतमतिवेलम् ॥ २ ॥

लिखति भवतीं रहसि भणितुमथ याचतेऽ—
नधिगते वचसि तव सपदि शुचमयते ।

1. क. निरकूजिते । ख. नकरकूजितं ।
2. क. चुम्बितम् । ख. चुम्बितुम् ।

स्नेहरूपागमरसं यावदभिलषति[1] तं
निजहृदयदारणं तावदारमते ॥ ३ ॥

स्वप्नभवदङ्गसङ्गमसुखे निर्भरम्
स्वजति[2] किशलयरुचिं[3] पिबति मुहुरधरम्[4] ।

नृपतिपुरुषोत्तमकृतं शृणुत सादरम्
हरिचरितगीतमिदमुदितरससारम् ॥ ४ ॥

दैर्घ्यं लोमलतागतं कलयते चिन्तासु वक्षोजयोः
स्थौल्यं निःश्वसिते कराधरपदच्छायां दृशोः क्षीणताम् ।
मध्यस्यावयवेषु कुन्तलरुचिं सम्मोहिनी स्वात्मनि
प्रेयांस्ते विपरीतवर्णरचनां नाम्नः परं चाश्रुणि ॥ ५ ॥

## ऊनविंशः प्रबन्धः

( चिन्तादेशीरागेण गीयते )

मोहमुपेतं[5] तं युवनन्दनचन्दनपवने वहति घने ।
भवदुपगमकृतकैतवसन्धं सुहृदुपकुरुते केलिवने ।
ध्रुवमयते विपदम्[6] । अवधारय सखि न मृषावादम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

तव तनुसङ्गतकामनया हितहुतवहशङ्कविकरालम् ।
विकसित किंशुककुसुमकुलं प्रति धावति निपतितुमनुवेलम् ॥ २ ॥

हिमकरकरघनसाररजो मृगमदपरिशीलनपरिणाहम् ।
मरणमुपैतुं[7] स हि बहुमनुते न गणितविरहदहनदाहम् ॥ ३ ॥

---

1. क. यावदभिलषित । ख. यावदभिलसति ।
2. ख. स्वजयति ।
3. ख. किसलयरुचि ।
4. ख. मुहुरधरम् ।
5. क. मोहनमुपेतम् ।
6. क. विषदम् ।
7. ख. मरणमुपेतम् ।

वर्णयतु मुकुन्दमुदञ्चयमानं जीवय निजहृदयगानम् ।
पुरुषोत्तमनृपगीतं जनयतु मुररिपुसम्पदमहिमानम् ॥ ४ ॥

यावत्पुरो मिलसि माधवनया सखि त्वं
यावच्च मोहमयते मदनानलार्तः ।
तावन्मनोरुजमयं लभते न दीर्घा
तस्यान्यदा न[1] विषया मनसोऽप्यवस्था ॥ ७ ॥

इति विरहावस्थां निशम्य दुस्थामुदञ्चितोत्कण्ठाम् ।
मदनशरपीड़िताङ्गी सपदि कृशाङ्गी बभूव सा दूना ॥ ८ ॥

### विंशः प्रबन्धः

( कर्णाटरागेण गीयते )

समुदित शशधरविम्बविड़म्बन माननकमलममलशोभम् ।
गलितनिमीलितनयनं लोकं मम सुखचुम्बनधृतलोभम् ॥
मञ्जुनिकुञ्जगतं सुखसारम् । दयितमुपैतमुदितविकारम् ॥
॥ ध्रुवपदमिदम् ॥

मनसिजतापविमोचनलोचनपथमनुपममनुगमयेयम् ।
तनुलतिकामथ चिरविरहरुजं सपदि मुदा परिशमयेयम् ॥ २ ॥

मधुरसुधारससोदरमादर कलितमहमधरमधुपानम् ।
विदधे पृथुतनरोरमि निदधेकुचयुगमपगतपरिधानम् ॥ ३ ॥

मुकुलवकुलदलशयने विजनेसम्प्रति कलये रतिसङ्गम् ।
नृपपुरुषोत्तमगीतं सुखयतुजनयतु भवभयभङ्गम्[2] ॥ ४ ॥

स्मरशरघृतातङ्के शङ्के लतान्तरनिह्नुते
प्रणयिनि पराशनादिनाभिसारविधौ[3] मुधा ।

1. ख॰ तस्यानदान ।
2. क॰ भवभवभयभङ्ग । ख॰ भवभयसङ्ग ।
3. क॰ पराशनाभिसारविधौ ।

किमिह निजमार्गेण रोधा निशाक्रमशङ्किकया
रमणमभिसर्तुं गन्तुं मनोऽपि सहायनाम् ॥ ९ ॥

परस्परासंश्रवणमात्रबन्धयो —
रवेत्य राधा मुरवैरिणोः सखी ।
मनोरथं केलिमहोत्सवाहितं
वचोऽनुकूलं मधुरं जगाद सा ॥ १० ॥

## एकत्रिंशः प्रबन्धः

( गौड़ीरागेण गीयते )

मधुमगयोदितमधुमधुरोऽयं मरुदनुसरति सलीलम् ।
उपचिनुते मानमिदं मदनमुपाहितहृदयमदम् ॥
कामयते तव सङ्गम् , स तदधुना[1] कुरु रतिरङ्गम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

विकसितकुसुमसमूहसमुद्गत सौरभसंभृतगर्भम् ।
केलिगृहं प्रमदकरं भज सखि ! निधुवन-सुखसारम् ॥ २ ॥

शीलय नीलनिचोलमुदञ्चय कालागुरुपरिलेपम् ।
घनतिमिरे प्रतिकूलं कलय न मुक्ताभरणकुलम्[2] ॥ ३ ॥

सफलय तरुणीकृतसुकृताहित[3] यौवनमगणितमानम् ।
हृदि तनुते परममुदं नृप पुरुषोत्तमगीतमिदम् ॥ ४ ॥

उल्लसत्प्रणयबन्धबन्धुरा[4]
सा सखी गदित[5] नर्म संकथाम् ।
साभिलाषमवगत्य सत्वरं
वेशमेतदुचितं समाददे ॥ ११ ॥

---

1. क. सततधना ।
2. क. मुक्ताभरोकूलं ।
3. क. सुकृताहत ।
4. क. प्रणयबन्धुवन्धुरा ।
5. क. गदितपदो नास्ति ।

निस्तोमपरिज्ञानविमूढा[1] गन्तुमुत्सुका ।
सूचीभेद्यं तमो दृष्ट्वा जगाद[2] गतसाध्वसा ॥ १२ ॥

उद्दण्ड-चण्डकरदीपशिखावलीढ
ब्रह्माण्डनालुजमसीत्रसरेणु-जालैः ।
वातावधूननवशादिव विप्रकीर्णै—
र्विश्वं विभाति परितः स्थगितं[3] तमोभिः ॥ १३ ॥

विरहितरुणीहत्या नित्यार्जितैरिव कल्मषै—
स्तिमिरनिकरैरिन्दोर्बिम्बं पिधाय विजृम्भितैः ।
स्थगितमधुना वर्त्मप्रेयोनिकेतगतस्फुटं
मदनदहनज्वालालीलायितेन विलोक्यते ॥ १४ ॥

## द्वाविंशः प्रबन्धः

(आभिरीरागेण गीयते)

कस्तूरीतिलकं सपरशुं निटिलफलकसहितम् ।
निदधाति[4] पुरतो मदनं भ्रूधनुषा मिलितम् ।
स्मरविवशा घनतमसा पथि पिहिते गच्छति[5] राधा ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

कलयन्ती सुरपति मणिगणभूषणमनुरूपम् ।
भजमाना मृदुपरिकल्पितकालागुरुलेपम् ॥ २ ॥

कलरणितं संयमयन्ती मणिमञ्जीरयुगम् ।
परमेकं भावयमाना दयिततमं सुभगम् ॥ ३ ॥

---

1. क. परिज्ञानाविमूढा ।
2. क. जगाद ।
3. क. स्थगतं ।
4. ख. निदधाना ।
5. क. पतिन्यपहिते गच्छ ।

लघुचरणं विन्यसन्ती सङ्केताभिमुखम् ।
गीतमिदं नृपपुरुषोत्तमकृतमादिशतु सुखम् ॥ ४ ॥

मधुमथननितान्तस्नेहसंधुक्ष्यमाण —
स्मरहुतवहकीला दीप्यमानाङ्गवल्ली ।
पथि बहुलतमिस्रा[1] भोगसन्दिह्यमाने
लघुपदमुपयान्ती प्राप सङ्केतकुञ्जम् ॥ १५ ॥

इति श्रीपुरुषोत्तमदेवगजपतिमहाराजकृतेऽभिनवगीतगोविन्दे
महाकाव्येऽभिसारिकावर्णने मुदितराधो
नाम तृतीयः सर्गः ।

1. क. बहनतमिश्रा ।
ख. बहुलतमिश्रा ।

# चतुर्थः सर्गः

## विमूढराधः

अथ निधुवनसिद्धिं वीक्ष्य मूर्त्तामिवैना—
मनिभृतपदपातज्ञाततत्सन्निधानाम् ।
मुररिपुरनुनिन्ये[1] राधिकां चाटुवादैः
श्रमजलमपनीय स्वीयचेलाञ्चलेन ॥ १ ॥

संवाहयामि चरणावपसारयामि
रेणुं दृढं परिरभे मृदुलाङ्गवल्लीम् ।
तन्वङ्गि संचरणखेदममुं विहाय
संकल्प[2]कल्पितरतोत्सवमारभेथाः ॥ २ ॥

प्रक्रान्ते सुरतमहोत्सवे तदानीं
राधाया मधुमथनः सकौतुकेन ।
चित्तस्य स्थितिमवगन्तुमेतदाख्या—
माख्यातुं समभिदधे कलावतीति ॥ ३ ॥

अथ रोषकषायिताशाया
प्रियसङ्गं सपदि[3] प्रहाय सा ।
तव किं मम का[4] समं तया
विहर त्वं[5] कितवेत्युपाययौ ॥ ४ ॥

---

1. क. रम्ये ।
2. ख. सकल्प ।
3. ख सपद ।
4. क. ख. मयका ।
5. क. विरहत्वं ।

## त्रयोविंशः प्रबन्धः

( कल्याणनाटरागेण गीयते )

स्खलितचरणगतिरुरुगिलितवदना ।
भ्रमणविसारितनारकनयना ॥
अगणितरमणानुनया ।
निरवर्त्तितलघुराधाविनया[1] ॥
॥ ध्रुवपदमिदम ॥ १ ॥

दशन[2]निपीड़नपरिलुलदधरा ।
खरनिःश्वसितविमोचनघोरा ॥ २ ॥

करमपरेण करेण नितान्तम् ।
घटयन्ती नवपल्लवकान्तम् ॥ ३ ॥

पुनरनुपैतं शपथं कुरुते ।
नृपपुरुषोत्तमगीतमुदयते ॥ ४ ॥

विपिने परिभ्रमन्तीमनवस्थितमार्गनिर्णयां कोपात् ।
राधामुषसि वयस्या दृष्ट्वावदत्तदन्तिकं[3] यान्ती ॥ ५ ॥

## चतुर्विंशः प्रबन्धः

( ललितरागेण गीयते )

वदने श्रमजललवभरसंचितकान्ति भुवि[4]
प्रतिविम्बितभगण सुभगस्मितरुचिरुचिरे ।
निधुवनविरतिसमुद्भवदुःसह
रोषपराभवमधुना सूचयति ध्रुवमतिविधुरे ॥

---

1. क. राधाऽविनया ।
2. क. वेसन ।
3. क. वदे तदन्तिकं ।
   ख. वददे तदन्तिकं ।
4. क. भूति ।

विपिने वहलदलावलिभिकरततभुवि
घनहिमशीकरललितपरागनिरन्तरपरिरचिते[1] ।
रजनीविरतिसमयोदितपरभृतरुतपरिशङ्कित
विरहि मनसि किमियं वत चरति तते ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

गमने श्लथकवरीदरसङ्गलदुज्ज्वल
गर्भकनिर्मलतरणिदुहितृजलसंमिलदमरधुनिम्[2] ।
बोधयति प्रियसङ्गमसमयरुषा
विषयद्रुमभृतभ पे गणयति नासममृदमवनीम् ॥ २ ॥

नयने विकसितकोकनदोपम सविशेषाहित
शोणिमवति निविरिषमतिभ्रमदूरवहिते ।
नभसि सुसंभृतजलधरधारानिकर
सहोदरमविरललोतकसंभरमुपचिनुते ॥ ३ ॥

विजने विगतभयानिलकम्पितपल्लव
चपलिमसम्भतचलदधरा न च मामुत परिचिनुते ।
गीतमिदं पुरुषोत्तमनृपतिभणितममृतोपम—
ममितभवाधि-परिश्रममपनयते ॥ ४ ॥

अथ सविधमुपेतया तया सा निभृतनिकुञ्जगृहे सखी निविश्य ।
असकृदनुयुजो परोपहेतुं तदभिदधे सकलं ततश्च राधा ॥ ६ ॥

प्रबोधिता सा बहुधा वयस्यया
वचोभिरासञ्जितयुक्तिभिस्तया ।
न मन्यमाना रुषमात्मनो हिता—
मवापनिर्वेदमनङ्गमोहिता ॥ ७ ॥

---

1. ख. परिनिचिते ।
क. दमलघुनीम् ।

## पञ्चविंशः प्रबन्धः

( भूपालरागेण गीयते )

कामं[1] केलिकलाजनितं मे मन[2] श्रममपि महते ।
यस्तं सम्प्रति हित्वा हृदयं स्थातुं वन वजते ।
सखि दयिततमम् । किमहं मूढ़ा निरकाशयमपि तम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

किञ्चन कृत्यमयं कलयन्नपि हृतिं मम कुरुते ।
सोऽहं पुनरवधारितकामा वामा तस्य[3] रते ॥ २ ॥

स खलु निमीलनसमयेऽपि निजे विरहं मम तनुते ।
कथमिदमधुना जीवनहृतकं तिष्ठति न तमयते ॥ ३ ॥

प्रणयिनमेनं पुनरुपयातं कथमचिरेण लभे ।
नृपपुरुषोत्तमगीतं सततं मतिमादिशतु शुभे ॥ ४ ॥

तानि प्रियाणि वचनानि तदव्यलीकं
प्रेमप्रबुद्धमदनानि तदिङ्गितानि ।
ते सम्भ्रमारतिषु मन्मथतन्त्रसिद्धा—
श्चित्तं वहन्ति मदयन्ति च साम्प्रतं मे ॥ ८ ॥

## षड्विंशः प्रबन्धः

(केदारगौड़ारागेण गीयते)

मधुरमधुरसमत्तमधुकरमञ्जुगुञ्जितमञ्जुले ।
कुञ्जधामनि केलिशयने रचितशयनं शीतले ।
चटुलचाटुपटीयसा वचसानुरञ्जितमानसम् ।
प्रणयकलहलवेऽपि मम परिकलितजनितागसम् ॥

---

1. ख. काम ।
2. क. मेन । ख. प्रेम न ।
3. ख. वामातरस्य ।

तमपि कान्तमिन्दुमुखसहह किमिदं मोहिता ।
आगमं परिहाय कुपिता सुरतमुखमरत्वञ्चिता ॥
॥ धुवपदमिदम् ॥ १ ॥

मृदुलकरकमलानुलालित[1] चरणगमनकजापहम् ।
निबिडकुचपरिरम्भ सम्भ्रमनिरतिसहितसुखावहम् ।
श्रमजजीवन विन्दुवृन्दममन्दवीजनकर्म्मणा[2] ।
मोचयन्तमनन्तहिमजलमज्जनाहित[3]शर्मणा ॥ २ ॥

शपथशतमुपगन्तुमन्तिकमसकृदमितगुणाकरम् ।
विदधतं दधतं करे चलदञ्चलं मम सादरम् ।
कुसुमसायकसायकप्रथमानमानसबाधया ।
कवलितं पृथुसुरतसम्भ्रमविगमिताखिलबोधया ॥ ३ ॥

अगणितापदुपागतया[4] मुदितरुषि मयि सादरम् ।
प्लुतगिरा मम रचितदूर्ति मदनविग्रहसुन्दरम् ॥
नीलगिरिपतिसम्मदं नृपपुरुषोत्तमभाषितम् ।
दिशतु गुरुकलहान्तरितया राधया विरहोदितम् ॥ ४ ॥

किं मया न गणितो मधुमासः
प्रस्मृतः कथमनङ्गजतापः ।
किं मयि प्रणयिनाप्यपराद्धं
येन साम्प्रतमहं परिखिद्ये[5] ॥ ६ ॥

विरहमसहमाना बिभ्रती सानुतापं
मधुमथनगुणाली स्पन्दितस्वान्तवृत्तिः ।
स्वसविधमुपनेतुं भूय एवाचिरेण
स्मरशरविकलाङ्गी तामवादीद्वयस्याम् ॥ १० ॥

---

1. क ललित ।
2. क. श्रमजलजीवन ।
3. ख. मञ्जुलाहित ।
4. क. अगणितापदपागताया ।
5. क. परिखेदे ।

## सप्तत्रिंशः प्रबन्धः

( देशीरागेण गीयते )

आलीदानीमुदारे कुञ्जमन्दिरे सङ्केतम् ।
सञ्चयन्ती संलापं कुर्वती मजे कान्तम् ।
तदङ्गमङ्गमङ्गलं संगाढं भावयेयं
कामं संपूरयेयं नितान्तम् ॥
आलीदानीमहं ते कामये पदं गाढ़ं
सदापयन्तो भूयोऽमुं सन्निधापये नाथम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

आलीदानीमनङ्गे बाणसञ्चयं ज्यावन्ध्ये[1]
सन्दधाने जाये भूयो विधानसंमूढ़ा ।
मदङ्गालिङ्गनकृते गाढ़ं किम्बावलम्ब्ये
जाने तन्नातिमोहनिरूढ़ा ॥ २ ॥

आलीदानीममन्दे कुञ्जमन्दिरे रम्ये
संवेशिताङ्गी गण्डाभोगे लभे सुखासङ्गम् ।
यथा तं केलिसङ्गरे जेतारं वा
जयेयं स्तवे भूयो गुरुं तदानङ्गम् ॥ ३ ॥

आलीदानींमुदिते पुरुषायिते[3] सम्भोगे
वपुषि[4] स्वेदायिते[5] नातिशायिता नूनम्[6] ।
कृतं श्रीपुरुषोत्तमेनेदं
मोदं विधत्ते गीतं राधानुलापसम्भिन्नम् ॥ ४ ॥

---

1. क. यावन्धे ।
2. ख. ग. यदा ।
3. ख. पुरुषा इते ।
4. क. ग. वक्षसि ।
5. क. ग. स्वेदायेते ।
   ख. स्वेजायेते ।
6. क. तनुम ।

अहमिह परिपाकं दारुणं चिन्तयन्ती
न सहचरि विमूढा यन्निष्टे निविष्टा ।
उपकुरु तदिदानीमन्तिकं साम्प्रतं मे
सविनयमनुनीय प्रापय प्राणनाथम् ॥ ११ ॥

अथानुतापविधुरं राधिकाया वचः सखी ।
निशम्य त्वरया दूना[1] हरेरन्तिकमन्वगात्[2] ॥ १२ ॥

अनादृत्य क्रीड़ामनृतकृतगोत्रस्खलनजं
परितापं धृत्वानुनयमगृहीत्वान्धतमसे ।
गतायां राधायां प्रणयभरभङ्गार्तिविकलो
विलेभे निर्वेदं परिगलितमोदं मुरहरः ॥ १३ ॥

## अष्टाविंशः प्रबन्धः

( शुद्धनाटरागेण गीयते )

घनतिमिरचर[3]निशाचरमीकर वनभुवि नादृतहितपरिवारा ।
अगणितविपथचरणविनिवेशनमनुदितभयभरसुखसंसारा ॥
सा सरला मयि कथमतिविनया ।
रुषमुपगमिता मृदुतरहृदया ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

मयि करतलमिलदविरलनीवीबन्धविमोचननिरतेऽधोरा ।
हिमकरमणितरुणीव निरन्तरजललवदन्तुरिता सविकारा ॥ २ ॥

दृढ़परिरम्भविलाससमुद्गतपुलकपटलवलिता खलदेहा ।
छुरितं सुखं मयि[4] जनयति कामं स्तम्भमुपैति च विपुलारोहा ॥ ३ ॥

---

1. क. यदुना ।
2. क. मन्वयात् ।
3. ख ग. चय ।
4. ख मह ।

कथमपि व्रजति विहाय मदन्तिकमिव निजगात्रं मयि निदधाना ।
नृपपुरुषोत्तमकृतिरियमुदयति मुररिपुकेलिकलाकलमाना ॥ ४ ॥

यामि कुत्र करवाणि च किम्वा
तां कथं प्रणयिनीमवलोके ।
इत्थमाकुलनयाकृतिशून्यं
क्वापि न स्थितिमुपैति मनो मे ॥ १४ ॥

मनोजबाण प्रथमानबाधया
सखी नियुक्ता समुपेत्य राधया ।
भ्रमन्तमारादवलोक्य माधवं
वचोऽनुकूलं निजगाद[1] सादरम् ॥ १५ ॥

## ऊनत्रिंशः प्रबन्धः

( काम्भोजीरागेण गीयते )

अपि सा भवता विगुणा तव परिचरणा निपुणा ।
अनुगमनीया मृदुला करुणासागरलघुपदमबला ॥
तव परमिह सा शरणं वाञ्छति विरहाकुलिताचरणम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

निजमृदुलगिरा सुधया मृतसंजीवनपरया ।
जीवयतामतिदूनामिह सा मनसिजदहनासहना ॥ २ ॥

वहलगुञ्जदलिपुञ्जे कुसुमितकुञ्जनिकुञ्जे ।
नवदलसुललितशयने क्षणमुपकुरुतामतिमृदुपवने ॥ ३ ॥

राधाविरहचरितं[2] रसभरसम्भरचित्तम्[3] ।
नृपपुरुषोत्तमभणितं सुखयतु रसिकजनाननवरतम् ॥ ४ ॥

---

1. क. वचोऽनुकूल्या निजगाद ।
2. ख. चरित्रं ।
3. ख. चित्रमे ।

हतक्रीडाक्रीडानुगतमनसा दीनवचसा
भवन्तं सा कान्तं सुभगसममीष्टेति[1] सततम् ।
रतान्ते निष्क्रान्ते कुचकलशयोः पत्रमकरा-
विधौ चित्रं तव प्रणयसमयं नातिगमय ॥ १६ ॥

इति श्रीपुरुषोत्तमदेवगजपतिमहाराजकृतेऽभिनवगीतगोविन्दे
महाकाव्ये कलहान्तरितावर्णने विमूढराधो
नाम चतुर्थः सर्गः ।

1. क. ख. सममीष्टौति ।

# पञ्चमः सर्गः

## विधग्धमाधवः

अथ तपनसुतातटी समीपे
वकुलवनान्तरमाधवीनिकुञ्जे ।
उपशमयितुमाशु राधिकां तां
कृतसमयो मुरजित्सखीं न्ययुङ्क्त ॥ १ ॥

भुजगभवनं[1] भानौ गाढान्धकारजिघांसया
प्रविशति तदा रोषावेशारुणीकृतवर्ष्मणि ।
चिरसमुदयद्वैरोद्रेकादनुज्झितमत्सरं
सपदि तदुपाक्रान्तं कृत्स्नं जगज्जगृहे तमः ॥ २ ॥

अत्रान्तरे छलकृते[2] प्रणयापराधे
राधां विरोषणतयापगतां निशम्य ।
नागेन्द्रमङ्कुश इव प्रसभं सुदामा
सङ्केतकुञ्जगमनादरुणन्मुरारिम् ॥ ३ ॥

अथ सहचरीनर्म्मालापं निशम्य समुत्सुकां
तमसि बहले गत्वा लीना[3]नुकुञ्जगृहान्तरम् ।
मुररिपुमनालोक्य म्लानाननाश्रुमुखी मिथः
क्वचिदपि लतामध्ये राधा शुशोच निषेदुषी ॥ ४ ॥

---

1. क. भुवनं ।
2. ख. अत्रान्तरेत्सलकृते ।
3. ख. ग. लीला ।

## त्रिंशः प्रबन्धः

( शङ्करराड़ीरागेण गीयते )

उदचलदाशु सखीजनवचसा ।
शठचरिते दयिते धृतमनसा ॥
मयि न तदीयं सदयं हृदयम् ।
मन्ये मम शरणं यमनिलयम् ॥
उपरत जीवनधृतिसुखसारा ।
विदधे सम्प्रति किमिहमघोरा ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

व्यथितसखी यदि सुहृदयभेदम् ।
किमिह करोमि मुधा गुरुखेदम् ॥
कैतवभावनिबन्धननियतम् ।
पुनरुपयामि किमेनं[1] दयितम् ॥ २ ॥

निवसति स मृदुलमलयसमीरे ।
किम्बा तदितरकुञ्जकुटीरे ॥
तिमिरतिरोहित नयनविसारा ।
तदवाकलयं[2] न धृतविकारा ॥ ३ ॥

अपयातो यदि गमनविलम्बे ।
सममतदद्य किमहमवलम्बे[3] ॥
नृपपुरुषोत्तमकृतमिति गीतम् ।
मुररिपुरचितनिबन्धनपूतम्[4] ॥ ४ ॥

उपचितमदनविकारा निरहंकारा लतागृहं गत्वा ।
वितथपरिश्रमविवशा नैव हताशा धृतिं क्षमा[5] धर्तुम् ॥ ५ ॥

---

1. क. किमेवम् ।
2. क. तववाकलयं ।
3. क मम तदद्य किमिहमलम्बे ।
4. ख. निबद्धनपूतम् ।
5. क. यमे ।

## एकत्रिंशः प्रबन्धः

(ककुभरागेण गीयते)

किमवधारितचरणनिपतनचाटुवादा ।
आगमं परिहाय रमणं वलितखेदा ॥
वञ्चिता दयितेन[1] तेन विगलितमौनम् ।
नियतमहह दधामि[2] सम्प्रति न हतजीवम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

मदनुसरणपरायणं[3] कलितांशुकान्तम् ।
न परिकुपितालोकयं परमावतान्तम् ॥ २ ॥

केलिकौतुकसमयकृतमनृतापराधम् ।
जानन्ती न समाचरं किमु गुरुविरोधम् ॥ ३ ॥

नीलगिरिपतिचरितपूतमिदं निकामम् ।
पुरुषोत्तमनृपतिगीतं दिशतु कामम् ॥ ४ ॥

वने भ्रमन्त्या न मयेक्षितः प्रियः
पुनः सखी वानुसृता तदन्तिकम् ।
गतागतोत्थव्यसनस्य साक्षिणी
मदन्तिके केवलमस्ति यामिनी ॥ ६ ॥

## द्वात्रिंशः प्रबन्धः

( नारायणदेशाख्यरागेण गीयते )

हिमयमुनाजलशीकरशीतल-निर्मलवृन्दावनविपिने ।
मधुकरझङ्कृतिसङ्कुलकोकिल कलरवरचितहृदयमदने ॥

1. ख. कितवेन ।
2. क. ग. दधासि ।
3. क. मदनसरणपरायणम् ।

हृतविभिवशागतया, इह समलम्भि सह तया न मया ॥
॥ ध्रुवपदमिदम ॥ १ ॥

घनमकरन्दरसं दधता मरुता[1] मृदुकम्पिततरुमाले ।
गलितपरागभरा दलावलिवलिते सम्भूतं मधुकाले ॥ २ ॥

विरहिहृदयगुरुदारणकारण[2] शुककुलसुरसमणितिसारे ।
अभिनवकुसुमितमल्लीमतल्ली[3] वल्लरीवलयित सहकारे ॥ ३ ॥

विदधति कुसुमशराशुगसंचय संचयमनुमोदित कामे ।
दिशतु नृपति पुरुषोत्तमगीतं हरिचरणे मतिमभिरामे[4] ॥ ४ ॥

विलीनप्रेमाणं तमवकलये नैव शिथिलोऽ—
नुरागस्तस्मिन्मे स खलु बहुशो विप्रलभते ।
व्यलीकं तन्मन्ये पुनरहमहो सम्प्रति च तं[5]
तथैव प्रत्याशा सततमनुबध्नाति कितवम् ॥ ७ ॥

## त्रयस्त्रिंशः प्रबन्धः

( छायानाटरागेण गीयते )

यदि पुनरधुना सविधमुपेतं
सहचरममुमहमवलोके ।
सविनयमनुनयमारचयन्ती[6]
न हि निपतामि विरहशोके ॥
किं न विचिन्तितमन्तकलोलम्[7] ।
मदनकदनमिदमतिवेलम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

---

1. ख. मरता ।
2. क. दारुणकारण । ख. दरुण वारुण ।
3. क. वल्लीतमल्ली ।
4. ख. हरिचरणमतिमभिरेमे ।
5. ख. चिनम् ।
6. क. मारचन्ती ।
7 ख. लीनम ।

अनियतमार्गनिमन्थनकलुषं
न पुरुषहृदयं कलयन्ती ।
हन्त तमन्तिकमितिनिरमुं च[2]
परुषमनल्पं प्रजपन्ती ॥ २ ॥

यदि पुनरुदयति सुकृतममन्दं
तदनुभवामि सुरतसारम् ।
अविदितदयित निवासनिकुञ्जं
विदधे वा कथमभिसारम् ॥ ३ ॥

पुनरुपगमयति सम्प्रति किं वा
तमिह सखी भृशमनुनीतम् ।
मुररिपुसम्मदमातनुतं
नृपपुरुषोत्तमकृतगीतम् ॥ ४ ॥

तमोभिः कालुष्यं जगति भजमाने द्विजगणैः
क्वचिल्लीनं तारा कुसुमवलितध्वान्तकवरीम् ।
प्रगल्भामभ्येत्य स्वपिति च सुखं पल्लवकुलं
त्रियामां निष्कम्पं तदिह तदते किं नु करवै [3] ॥ ८ ॥

अथ त्यक्त्वा मानं सविधमुपयातां मुरभिदो
विषीदन्तीं राधा क्वचिदपि लतावेश्मनि मिथः ।
परिज्ञातुं तस्या निधुवनकथानां परिणतिं[4]
निशान्ते गच्छन्ती वनभुवि लुलोके सहचरी ॥ ६ ॥

---

1. क. ख. हृदयम् ।
2. ख. ममुञ्चं ।
3. ख. कृत वै ।
4. ख. परिगतिम् ।

सापि तत्र सविधे नितसन्तोमश्रनिर्झरपरिप्लुत वक्त्राम्[1] ।
राधिका सहचरीं तदुदश्रां विप्रलम्भचरितं स्वमवोचत ॥ १० ॥

## चतुस्त्रिंशः प्रबन्धः

( मल्लाररागेण गीयते )

चन्द्रचन्दनघन[2]मलयवनपवन[3] सङ्गतिरपि न जनयति रतिम् ।
चूतचम्पकनवमालविका नवकेतक्योऽपि न ददति धृतिम् ॥
किं सखि विदधे किमु संनिदधे ।
स्वयमपि सम्प्रति वल्लभसविधे ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

नन्दनन्दनतनुरुचिविगलदतनुमद इव कुसुमशरो नियतम् ।
तत्र सन्दितघनभाववलितमनसं मामनुतनुते कुपितम् ॥ २ ॥

अङ्गसौरभभरसूचितपरिसरयमुनातटगतकुञ्जतलम् ।
मानसम्भृतमतिरगणितपरिणतिरहह तमनु किमु नोदचलम् ॥ ३ ॥

नाथमाहृतरतिसुखभरपरिचितिमधुना पुनरपि कुत्र लभे ।
पुरुषोत्तमगजपतिकृतिमनुभजमतिरपि वल्लतामतनु शुभे ॥ ४ ॥

आसादिताः कति न केलिकथाः पुरा वा
यत्रेप्सितं प्रणयिना न कृतं व्यलीकम्[4] ।
यत्कैतवं मयि सखि[5] प्रसभं प्रणीतं
तेनाद्य मां प्रतिहतोत्सव एष लोकः ॥ ११ ॥

---

1. क. वस्त्रां ।
2. ख. चन्द्रकचन्दनघन ।
3. क. मलयपवनपवन ।
4. क. विलोकं ।
5. ख. सखि मयि ।

## पञ्चत्रिंशः प्रबन्धः

( भैरवीरागेण गीयते )

किं मयापि[1] हताशया सखि केलिकौतुकलोलया ।
वारितो न समागतो मम सन्निधिं सकुशीलया ॥
कुञ्जगृहमुपलालिता तव मृदुगिराहमुपागमम् ।
वञ्चिता कितवेन तेन पुनरवाप्य सङ्गमम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

यदि स नियतं प्रणयमहितं कामुको मयि कलयते ।
वहलकोकिलकाकली किमु तं न मन्त्तमदयते[2] ॥ २ ॥

नालिमालागुणलता न च कुसुमसन्ततिरिपुकुलम् ।
रतिपतेरवलोक्य क्व यदिदं वहति नहि स हृदाकुलम् ॥ ३ ॥

विरतिमियमपि याति[3] रजनी विफलमेव मयासितम् ।
दिशतु भविकमनारतं नृपपुरुषोत्तमभाषितम् ॥ ४ ॥

घनतिमिरमसीभिराचिताङ्गा
नवनिरुद्दा ननु वेलमोक्षमाणा ।
तमुपगतमिव प्रतीत्य कृत्स्नां
रजनीमनैषमिमामहं विरामम् ॥ १२ ॥

## षट्त्रिंशः प्रबन्धः

( दीपकरागेण गीयते )

कृतिनिपुणा[4]मुदितगुणामनुसरति प्रियरामाम् ।
सखि विजने केलिवने पूरितनिधुवनकामाम् ॥
ध्रुवमधुना[5] मम विधिना हता भव सविकाशा ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

---

1. ग. ख. कयापि ।
2. क. 'मदयते' लेखो नास्ति ।
3. ख. मपयाति ।
4. क. इतिनिपुणा ।
5. ख. भ्रुतमधुना ।

मधुसमयजनितमयं पश्यसि मन्वि न किमेनम् ।
मम हृदयविगलदयं कृन्तति योऽयमनूनम् ॥ २ ॥

इह मुदिता व्रजवनिता या परिपश्यति कृष्णम् ।
किमधिगतं सुकृतशतं न तया केलिमतृष्णम् ॥ ३ ॥

कथमपि तं शठदयितं त्यजति न हृदयं सततम्[1] ।
गीतमिदं दिशतु मुदं नृपपुरुषोत्तमभणितम् ॥ ४ ॥

उन्मीलत्कलनादकोकिलकुलप्रारब्धकोलाहलै—
र्वाचाला विकचप्रसूनविसरत्सौरभ्य लोलाजुषः[2] ।
एते सम्प्रति कोकशोकदहनक्लेशच्छिदो मारुता—
श्चित्तं हन्त दहन्ति मन्मथजया प्रौढिक्रियाहेतवः ॥ १२ ॥

व्यतीताः प्रारम्भाः[3] प्रणयबहुमानोऽपि गलितो
दुराशा याता मे परिणतिमियं प्राणितुमपि ।
यथेष्टं चेष्टन्तां विरहिवधविख्यातयशसो
विभावामन्वेते स्मरमधुसुधांशुप्रभृतयः ॥ १४ ॥

इति श्रीपुरुषोत्तमदेवगजपतिमहाराजकृतेऽभिनवगीतगोविन्दे
महाकाव्येविप्रलब्धार्णवे विरहधनाधवो
नाम पञ्चमः सर्गः ।

1. ख. सततं ।
2. क. भूपः ।
3. ख. प्रारब्धाः ।

# षष्ठः सर्गः

## सोत्कण्ठवैकुण्ठः

मुरारिरपि राधाया विप्रलम्भकृतां दशाम् ।
निशम्य सख्या कथितामनुतापमवाप्तवान् ॥ १ ॥

अथ सा कृतसङ्केता निशागमे सङ्गमलङ्कर्त्तुम्[1] ।
मदनशरविकलाङ्गी[2]मुपेत्य राधां सखी प्रोचे ॥ २ ॥

### सप्तत्रिंशः प्रबन्धः

( घण्टारवरागेण[3] गीयते )

किं मया बत सुहृदये कृतमहितमदये सन्ततम् ।
वदति मन्मथबाणसंमथनाकुलं[4] स इति नियतम् ॥
सखि सुन्दरमेनमादरविरहितं ते वल्लभम् ।
कलय सङ्गममोदविभ्रममपि न[5] नूनं[6] दुर्ल्लभम् ॥
ध्रुवपदमिदम् ॥ १ ॥

केलिकौतुकसमयघातुकमपि करुणया मामियम् ।
नावधीरयति प्रियं वदतीति धृतदृढपरिचयम् ॥ २ ॥

---

1. ग. सङ्गमकलं कर्त्तुं ।
2. ख. विह्वलाङ्गी ।
3. ख. घण्टारवेण ।
4. ग. सम्मथनाकुलं ।
5. क. 'न' इत्युल्लेखो नास्ति ।
6. ग. नुतं ।

कुञ्जधामनि केलिसीमनि रचय सहचरीसङ्गमम् ।
मामुदीरयतीति धारय तदिह[1] विलसितमुद्यमम् ॥ ३ ॥

सन्निधिं तव सुरतवैभवमेतुमलमुपयाचते ।
पुरुषोत्तमनृपतिगीतं हृदयकलयन्मोदते ॥ ४ ॥

आचार्यकं मदन तन्त्रविधौ[2] स यत्र
कर्त्तुं व्यधत्त समयं सखि माधवस्ते ।
तत्रैव कुञ्जभवने दयितेन तेन
कामं प्रपूरय चिरादभिवाञ्छितानि ॥ ३ ॥

तदा मध्ये तोयं नवमुकुलबद्धाञ्जलिपुटां[3]
तपस्यन्तीं[4] दृष्ट्वा विरहपरिखिन्नां कुमुदिनीम् ।
परिरम्भं चक्रे विधुरुदयमभ्येत्यमृदुभिः
करैः ज्योत्स्नारम्भा[5]दुपरचितसाकूतहसितम्[6] ॥ ४ ॥

अथ सा तदीयवचसा प्रसाधनं राधिका विधायासु[7] ।
कल्पितरतिसम्भारा केलिनिकुञ्जे सखीमुचे ॥ ५ ॥

## अष्टात्रिंशः प्रबन्धः

( कोलाहलरागेण गीयते )

शिशिरशीतलमञ्जुवञ्जुलं मृदुलकिशलयं सङ्कुलम् ।
विरचितं रमणोचितं लघु शयनमिदमिह निर्मलम् ॥

1. ख. तदह ।
2. क. ख. तन्त्वविधौ ।
3. ख. पुटम् ।
4. ख. तपश्यन्तीं ।
   ख. तपस्यन्दी ।
5. ख. ग. ज्योत्स्नादम्भा ।
6. ग. हसिहं ।
7. ग. विधयासाशु ।

सखि: कदा हरिनं लभे व्रजकुले परिहतम् ।
मदनसुन्दररुचिमनोहरममलतनुललितं हितम् ॥

ध्रुवपदमिदम् ॥ १ ॥

किरटो[1] कवलिततिमिरशोभित केलिकुञ्जकुटीरकम् ।
विमलमणिमयदीपसञ्चयमकरत्वं सुखकारकम् ॥ २ ॥

रचितहिमकरशकलसङ्कर[2] नागवल्लीवीटिका ।
वनहिता करीदन्तरुचिपरिशोभिताधररञ्जिका[3] ॥ ३ ॥

पश्य विकसितकुसुमविरचित दामलेपनसहकृतम् ।
गीतमुदयति चारुगजपतिपुरुषोत्तमभाषितम् ॥ ४ ॥

सख्या श्रीमधुसम्पदा सहभवद्विश्रम्भलीला[4] कथा ।
कृतानन्दित पञ्चबाणतरुणीमुत्काट्टहासत्विषः ।
उद्यामद्युतयः पतन्ति शशिनः प्रत्रान्तरैरन्तरा
वल्ली धामघनप्रकीर्णविकसन्मल्लीप्रसूनश्रियः ॥ ६ ॥

दुरीकृतकनककिङ्किणिका निबद्ध
काञ्चीगुणः सखि रणन्मणिनूपुराश्च ।
एतौ रहः सुरत-चौर्यविशारदानां
यूनां रहस्यचरितं स्फुटमादधाते ॥ ७ ॥

---

1. ख. ग. किरण ।
2. ख. शङ्कर ।
3. क. रञ्जता ।
4. ख. लीना ।

## ऊनचत्वारिंशः प्रबन्धः

( शङ्कराभरणरागेण गीयते )

हिमकरकर[1]कवलित[2]घनतिमिरं वनमुपरतरुत[3]शकुनिकुलम् ।
दूरविभावितजनसञ्चरं विलसितुमिदममलमनुकूलम् ॥
सखि स किमधुना सविधमयते[4] ।
न चिरं मम हृदयं सहते ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

अनुदिनमिह मयि कितवाचरणं रजनिरियं परिकलयन्ती ।
मामुपहसति कलानिधिसन्निधिमुख[5]मविकलमुपरचयन्ती ॥ २ ॥

कुसुमशरेण शरावलि[6]रखिलं मामनुमुक्ता कुसुमकुलम् ।
सम्प्रति नयनपथं यदुपेतं व्यथयति मम हृदयं विकलम् ॥ ३ ॥

ज्वलयति[7] मदनदहनमनिलाहत[8] गलितं घृतमिव मधुवहलम् ।
नृपपुरुषोत्तमगीतकलोदित हरिचरितं जनयतु कुशलम् ॥ ४ ॥

मध्येऽनिशं भजति कामविलासवापी[9]—
लीलानुगे[10] वियति यूपरुचिं सुधांशुः ।

---

1. क. 'कर' इत्युल्लेखो नास्ति ।
2. क. ख. करकलित ।
3. ख. वनमुपररुत ।
4. ग. न सविधमयते ।
5. ग. सुख ।
6. ख. कुसुमशरावलि ।
7. क. व्यथयति ।
8. ग. मनिलाहति ।
9. ख. ग. विकासवापि ।
10. क. ख. लीलानुखे ।

अद्यापि किं सहचरप्रणयानुबन्ध[illegible] –
सं[illegible]मानसं [illegible] माम् ॥ ८ ॥

## चत्वारिंशः प्रबन्धः

( श्रीरागेण गीयते )

कुञ्जे कुञ्जे मलयमन्दमन्दुलोलाकुलपल्लव निकरे
विकचकुसुमगलदविरलमधुरससेचनशीततरे ।
देशे देशे केलिकलारचनोचितविरचितकिशलयशयने
कोमपि गोपवधूमभिरमयति किंवानन्दकरे ॥
निधुवनकामनया तदुपागमनधिया ।
हन्त विना दयितेन तेन मम किमिह मुधासि कथा ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

मावं मावं कामपि सीदति रतिरभसादतिविजनवने
कृतविनया वानङ्गजसंज्वरपरिदूषितहृदयम् ।
भ्रामं भ्रामं शशधरभयभरनिन्हुतघनतर
तिमिर निरन्तरकुञ्जवने वा वञ्चयति प्रियगोपवधूनिचयम् ॥ २ ॥

वारं वारं मदनु[2]शरणकृतसमयबन्धमपनीय[3]
मदन्तिकमनुपुनरभिशरणं प्रति सम्प्रति लज्जितहृदयतया ।
मन्दं मन्दं सविनयमुत समुपैति मयि प्रणयादिव
किं वा तदपराधभवसन्ततचिन्तनभयभरसरलधिया ॥ ३ ॥

---

1. क. सहचरसप्रणयानुबंध ।
2. क. मदन ।
3. ख. बद्धमपनीय ।

वारं वारं प्रणयकलहसमयेऽनुचितं वचनमुपागता—
महदकृपा किमुपदूपाहितया न मम मतिभ्रमयते ।
ध्यायं ध्यायं मुररिपुचरणकमलयुगलं विमलं
नरपतिना पुरुषोत्तमगजपतिना भणितं गीतं समुदयते ॥ ५ ॥

प्रसूनैर्भूयोभिः कुसुमविशिखः पञ्चविशिखो
जगत्प्राणोऽपि स्याद्विरहिदमन[1]कोऽपि पवनः ।
तथावस्था भेदादहह दयितोऽनिष्टचरितो
निरूपं शब्दानां स्थितिरिति न तत्स्वार्थगमिका ॥ ६ ॥

## एकचत्वारिंशः प्रबन्धः

( कलहंसरागेण[2] गीयते )

कलकण्ठमधुरवाणी यदि विजृम्भते मन्दम् ।
तदिह यामि विपदम् न पदमिदमालिसुखदम् ॥
दहति तनुमपरिमाणम् । भवतु किन्नु शरणम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

मकरन्दविन्दुकुन्दम् ।
पतति मम वपुषि वहलम् । भवति हृदतिविकलम् ॥ २ ॥

विकचकुसुमाभिरामम् ।
मदनविलोकने वामम् । वनं भवति कामम् ॥ ३ ॥

नृपपुरुषोत्तमकृतम् ।
शृणुत हरिचरितपूतम् । हृदयहारिगीतम् ॥ ४ ॥

मा मुञ्च पञ्चशरपञ्चशरीं शरीरं
मा सिञ्च सान्द्रमकरन्दरसेन वायोः ।

---

1. क. मदन ।
2. ख. ग. वलहंसरागेण ।

अङ्गानि तत्प्रणयभङ्गविगाहितानि
नालम्बितुं[1] क्षणमपि क्षमतेऽद्य[2] जीवः ॥ १० ॥

## द्विचत्वारिंशः प्रबन्धः

( देशाख्यरागेण गीयते )

अविरलकल्पिततरलविनिर्मलवर्त्तुलमुक्ताभरणमिदम् ।
मम विफलं मृदुलं हरिचन्दनलेपनमपि न वपुषि सुखदम् ॥
सखि कथममजं सुहृदयभेदं विदधतमेनं विगतदयम् ॥
छलकृतसमयं वल्लवतनयं न गणिततरुणीमरणभयम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

घनकवरीभरभरितमनोहरगर्भकमपनय रतिसुखदम् ।
मृगमदचित्रकमत्र विमोचय कुचयुगले धृतमशुभपदम् ॥ २ ॥

यामवतो समुपैति च चरमं याममियं परिणतचन्द्रा ।
किमिह करोमि मुधा तदुपागमपरिपालनमपगततन्द्रा ॥ ३ ॥

भविकपदं विपदं यदि मन्ये किं मम सम्प्रति हरिणा वा ।
नृपपुरुषोत्तमगीतकृतेयं मुररिपुचरणकमलकृतसेवा ॥ ४ ॥

यन्नागतः ससमयं बहुधा विधाय
किं तत्र सम्प्रति मनः सखि खिद्यते मे ।
स्यादेव कैतवविदां बहुवल्लभानां
नारीजनेऽप्यभिमते[3] प्रणयः प्रमादः[4] ॥ ११ ॥

---

1. क. ग. नालम्बतु।
2. ख. क्षणतेऽद्य ।
3. क. नारीजनेऽभिमते ।
4. ख ग. प्रवादः ।

अथ कमलिनीनिद्रामुद्रां हरत्यरुणे वर-
स्फुटितकलिका[1]गर्भो विन्दो भयेन विनिह्नुतम् ।
निशि किमु दिवा भीतं ध्वान्तं पुनः क्वचिदासितुं
घनमधुकरश्रेणीव्याजादमन्दमुपासरत्[2] ॥ १२ ॥

## त्रिचत्वारिंशः प्रबन्धः

( सोमरागेण गीयते )

विधिवशगे निजबन्धौ मज्जति हिमरुचिसिन्धौ ।
हिमलवलीतकमेषा त्यजति कुमुदिनी योषा ।
विरतिमुपैति निशेयं[3] किन्नु[4] मयापि विधेयम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

मम विनिमीलति दूनं हृदयसरोजं नूनम् ।
नामतुला रिपुगण्यं[5] विकसति कमलारण्यम् ॥ २ ॥

निशि मम रतिपरितोषं दृष्ट्वा धृतगुरुरोषम् ।
पश्य मुदितमिह कोकं मयि विनिहितनिजशोकम्[6] ॥ ३ ॥

तरणिभयादिव दीनं मनसि तमो मम लीनम्[7] ।
नृपपुरुषोत्तमगीतं भवतु मुदे समुदितम् ॥ ४ ॥

---

1. क. कमलिका ।
2. क, ग, दमन्दमपासरत् ।
3. क निशीयं ।
4. ख. कि न ।
5. ख. रिपुरण्यं ।
6. क मयिविनिदितकोकं ।
7. ख. तमोमलीनम् ।

सख्यं विनश्यतु मधोः कुसुमायुधेन
जीर्यन्तु तस्य विशिखाः प्रथितप्रमाणाः[1] ।
प्रेमावर्जितमनसामवमानसञ्ज्ञा
लीनास्तु यन्मयि वसन्त्यसवोऽधुनापि ॥ ३ ॥

इति श्रीपुरुषोत्तमदेवगजपतिमहाराजकृतेऽभिनवगीतगोविन्दे[2]
महाकाव्ये वासकसज्जावर्णने संतुष्टराधो
नाम षष्ठः सर्गः ।

---

1. ग. प्रभावाः ।
2. क. इति श्रीगीतगोविन्दे ।

# सप्तमः सर्गः

## विलक्षपुण्डरीकाक्षः

अथ प्रभाते सुरतान्तलक्षणं
दधानमभ्यागतमन्तिकं हरिम् ।
विलोक्य रोषारुणलोचनाम्बुजा[1]
विनिःश्वसन्ती निजगाद राधिका ॥ १ ॥

### चतुश्चत्वारिंशः प्रबन्धः

(कर्णाटवङ्गालरागेण[2] गीयते)

कुसुमसायकसायकावलि पीड़िताहम् ।
तव तु दयितालोकनामृतपूतदेहम्[3] ॥
दुःसहं कलयामि चन्दनपवनसङ्गम् ।
श्वसितमरुतासार ते सुखयति तवाङ्गम् ॥
आगतोऽसि किमत्र निरुपकलितमोदम् ।
सुरतसुखमनुभुय रचयसि कपटखेदम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

---

1. क. ग. रुषारुणलोचनाम्बुजा ।
2. ग. कर्णाटरागेण ।
3. ख. लोकनामृतदेहम् ।

दिशति कोकिलकाकली मम कर्णतापम् ।
मणितकृत[1]मनुभवसि सम्मदमतिदुरापम् ।
लोकये हिमभानुमपि परितापकन्दम् ।
तव सुखं तनुते तवानन[2]विधुरानन्दम् ॥ २ ॥

रजनीमनयमहं विदधती बहुविलपम् ।
त्वमुपशृण्वन्मधुरतन्मुखसुप्रलापम्[3] ॥
भवदुपागमनाशयाहमुपरतनिद्रा ।
जागरेण समर्पिता ते सुरतमुद्रा ॥ ३ ॥

लम्भिता भवता मयि श्रवदश्रुधारा ।
भविता सा धृतरतिश्रमवारिपूरा ॥
पुरुषोत्तमनृपतिभणितं सरसगीतम् ।
दिशतु कामं नीलगिरिपतिचरितपूतम् ॥ ४ ॥

कति न भवता वारम्वारं रते परिवञ्चिता
कितव सरजाभूवं नेयं सखि भवदन्तिकम् ।
कतिभकृते यातायातैरवाप च दुःस्थितिं
तदपि न लघुकर्तुं चित्तं प्रशाम्यति मां तव ॥ २ ॥

मुरारिरपि राधायाः विप्रलापं निशम्य तम् ।
सवैलक्ष्यमिति प्रोचे विनयानुनयान्वितम् ॥ ३ ॥

---

1. ख. भणितकृत ।
2. ख. ग. तदानन ।
3. क. त्वमुपशृण्वन्मुखसुप्रलापं।

## पञ्चचत्वारिंशः प्रबन्धः

( नाट्टरागैकतालेन गीयते )

प्रार्थयाम्यनवेक्ष्य न युक्ति शोभनं भवदाननम् ।
कामये[1] भवदङ्गसङ्गमनङ्गज्वरमोचनम् ॥
अनपराधिनि मुमुर्षौ मा कुरु प्रणयिनि जने ।
मयि रुषं परुषं च मा वद प्रियदर्शने ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

न हृदयं भवतीं विमुञ्चति किञ्च ते किलकिञ्चितम् ।
सन्ततं मम वाञ्छति स्मर तत्र नर्मकथाञ्चितम्[2] ॥ २ ॥

मुञ्च मानिनि मानमधुना किं मुधा परिशोचसे ।
दन्तरुचिरुचिराधरं मधुरं न किं वा भाषसे ॥ ३ ॥

कलय सुन्दरि सुचरिते मयि न भ्रमं कुरु विभ्रमम् ।
पुरुषोत्तमनृपतिगीतं तं भवतु हरिहृदयङ्गमम् ॥ ४ ॥

जाने भामिनि[3] मान एष मयि ते न स्थैर्यमालम्बते
का वा दासजनेऽपराधगणना संजायते त्वादृशाम् ।
एषा ते परुषापि मे वितनुते सम्मोदमेवाकृतिं
यत्कोपं प्रणये विराजति परं वैरं भवेदन्यथा ॥ ४ ॥

विप्रियं बहुशः कृत्वानुनयन्तं पुरो मुहुः ।
सोपालम्भमिति प्रोचे राधिका मधुसूदनम् ॥ ५ ॥

---

1. ख. कामयेते ।
2. ख. तत्रकर्मकथाञ्चितम् ।
   ग तन्त्र नर्मकथाञ्चितम् ।
3. ख भाविनि ।

## षट्चत्वारिंशः प्रबन्धः

(हिन्दोलरागेण गीयते)

सुरतसमरविमर्द्दिनि दीयतावलेपम्[1] ।
पृथुकुचयुगल[2]घट्टनाहितघुसृणलेपम् ॥
वदति तव हृदयमन्द तदधरसीधुपानम् ।
धारयन्नयनं च तन्मदशोणिमानम् ॥
कितव मा तव चाटुवादविनोदकृत्यम् ।
भवतु दुःखिनि मयि जने पुनरिदमसत्यम् ॥

॥ ध्रुवपदमिदम् ॥ १ ॥

कुसुमशरशरसञ्चयं हृदये विलीनम्[3] ।
नखरपदकपटेन पुङ्खकुलं[4] दधानम् ॥
अहमवैमि[5] विलोकयामि च निटिलभागम्[6] ।
सान्द्रसिन्दूर-मृदुलरजसा[7] रचितभागम् ॥ २ ॥

नियतमपहृतपौरुषं कलये भवन्तम् ।
कतमयापि मृगीदृशा रतिरङ्गतान्तम् ॥
अंशुकं यददादिदं परितुष्य वामा ।
सा निजं भजतेदृशं जितसुरतसीमा ॥ ३ ॥

---

1. ख. दयितावलेपम् ।
2. ख. ग. पृथुकुचाचल ।
3. ग. हृदये चलीनम् ।
4. ग. पुंखकूलम् ।
5. क. अपहमवैमि ।
6. ग. निटिलभाषम् ।
7. ग. मृदुरजसा ।

विरम न कुरु परिश्रमं[1] मम हृदयमागाम् ।
मोहदं भवभयनिवारणमनुसरणम्[2] ॥
पुरुषोत्तमपूर्णनिकृष्टमिति मधुरगीतम् ।
श्रृणुत मम भवमसमं हरिनाद्गीतम् ॥ ५ ॥

कथं नाम्नु यदृच्छया किमत्र यान्तिपुत्र गोपाङ्गनाः
प्रेमाणं न वदन्ति वास्तव बहु किं तासु तं कैतवम् ।
एषा हन्त हताशया यदभवं त्वय्येकताना मन—
स्यन्तोऽयं प्रणयोऽधुना ननु मम प्राणैः समं यास्यति[3] ॥ ६ ॥

विरहावसादनूनामतिमात्रं राधिकां कृष्णः ।
निजकृतमपराधमथो[4] विनिह्नुवानः पुनः प्रोचे ॥ ७ ॥

## सप्तचत्वारिंशः प्रबन्धः

( धनाश्रीरागेण[5] गीयते )

हृदयं जलभवकुसुमावचयं मयि वलितादरमनुयाते ।
हलकुसुमपरागसरागं क्षणमिव[6] वहति मधुपपाते ॥
मा कुरु सहचरि विधुरं चित्तं मानुमव च गुरुपरितापम् ।
कृतगिरितनयापरिचरणे मयि किन्तु मुधा रचयसि कोपम् ॥

॥ ध्रुवपदमिदम् ॥ १ ॥

---

1. ख. न कुरु न परिश्रमम् ।
2. ख. भवभयहरम् ।
3. क. संयास्यति ।
4. क. पथो ।
5. ख. धनासी रागेण ।
   ग. धनाशी रागेण ।
6. ख. क्षतमिव ।
   ग. क्षतमपि वा पदमपि ।

प्रतियामं भवदुपचितिविधिना मम जागरणाजनितरागम् ।
वहति नयन[1]मलिकं च तवाहित सिन्दूरद्युतिपरभागम् ।। २ ।।

तदुपरिचित मृदुचन्दनलेपनमिदमधुना मम तनुनिहितम् ।
भवति सरभसमिहागमनश्रमनिःसृत[2] जलभरपरिधौतम् ।। ३ ।।

गोपशिशुभिरुपनीतं मृदुलं परिशीलितमिदमपि चेलम् ।
घटयतु नृपपुरुषोत्तमगीतं हरिचरणे मतिमतिवेलम् ।। ४ ।।

जहाति प्रेमाणं प्रसरदपि वामं न नयनं
सरागोऽपि[4] श्रीमानमृतमधरस्ते[5] जनयति ।
अतोऽलीकेऽप्यस्मिन्[6] यदि वचनीये त्यजति मे
रुषं व्यक्तं किञ्चिद् भवतु मधुरं वक्तुमुचितम् ।। ८ ।।

इत्युदय्य रचितप्रणिपातं
चाटुकारमपि कैटभशत्रुम् ।
राधिकास्फुटकृतागसि तस्मि—
न्वीक्ष्य विप्रलभमानमवोचत् ।। ६ ।।

## अष्टचत्वारिंशः प्रबन्धः

(गान्धाररागेण गीयते)

तव परं गुरुमहिममोचनं न कुरु मम चरणविनिपातम् ।
मस्तकं प्रणयि सीमन्तिनी पादपल्लवरतिसङ्गपरिपूतम् ।।

---

1. ख. नलिन ।
2. ख. तदुपचरित ।
3. क. निश्रुत ।
4. ग. सुरागोऽपि ।
5. ग. मधुरस्ते ।
6. क. ततोऽलोकेऽप्यस्मिन् ।
   ग. अत्रोऽलीकेमऽप्यस्मिन् ।

गुरुतर बहुमानदानम् ।
मयि सुमग न पुनरपगमि तभिमानम् ॥

॥ ध्रुवपदमिदम् ॥ १ ॥

जागरं स्वपनसुखभञ्जनं न कुरु लघु रचय शयनीयम् ।
निशि तया सुभाया सङ्गमं भूय एवानुभवितासि कमनीयम् ॥ २ ॥

सुरतपरिणाहकृति सूचनं तदवयचिह्नसविशेषम् ।
न मलिनय वेशमतिसुन्दरं येन दीनमभिलषसि गमयितुमशेषम्[1] ॥ ३ ॥

यदि परिणामशुभदण्डनं सह तया रचय न विरोधम् ।
पुरुषोत्तमनृप तुभ्यमिदं दिशतु सततं परमानन्दबोधम् ॥ ४ ॥

यावच्चित्ते न भवति भयं निष्कृपस्त्रीवधे ते
यावत्प्राणा जहति न च मां दारुणा दुःखदग्धाः ।
जाने तावत्त्यजसि कुतुकं नात्रमाने ममेते
श्यामापन्ना यदि लघुना पूर्णकामस्तदासि[2] ॥ १० ॥

नैराश्यविकलां राधामेवमालोक्य हरिस्तदा ।
प्रेमानुबन्धमधुरं सान्त्वयन्निदमब्रवीत् ॥ ११ ॥

## पञ्चाशत्तमः प्रबन्धः

( शुद्धवराडीरागेण गीयते )

तव कलयामि सकामं रूपं परमिहभिरामम् ।
कामयते मम तव तनुसङ्गं हृदपि वलितरसजलधितरङ्गम् ॥

---

1. क. गमयन्तमशेषम् ।
2. ग. स्तंदासि
3 क. ख. ग. शान्त्वः

जनयसि मयि किमकारणं मानमकृतपरिमाणम् ।
चपलदृशा रुचिरविनिहितनारं मुखमविलोकय मम मन्मथकारम् ॥

॥ ध्रुवपदमिदम् ॥ १ ॥

विहर मालतीमितलोभं वनमवलोकय घृतशोभम् ।
विकसितकुसुमावचयविनोदं कुरु मम जनय च परमं[1] मोदम् ॥ २ ॥

शीतलविमलगम्भीरे शशिमुखि यमुनाजलपूरे ।
तदपि ललाटं तपने[2] विहर[3] मया सह कोमलपवने ॥ ३ ॥

परतरुणीरतिलिङ्ग[4] न दधे गलपयसि कथमङ्गम् ।
नृपपुरुषोत्तमगीतं सततं भवतु रसिकजनहृदयानुगतम् ॥ ४ ॥

कालुष्यं पयसां चिराय हृदये धाराधरत्वं दृशो –
रम्भोदध्वनि[5]सङ्गतापरुषता[6]वाचि भ्रुवोः सुन्दरी ।
विद्युद्वल्लरीताण्डवं च तनुते लीलायितं प्रावृषो
तादृत्ते शरदः प्रसादमधुना किं ते गभीराशयः[7] ॥ १२ ॥

अथ तन्निधुवन[8]चिह्नं दर्शं दर्शं रुषं न मुञ्चति[9] ।
विनिवर्त्तयितुं राधा जगाद मुरवैरिणं भूयः ॥ १३ ॥

---

1. ख. मरमं ।
2. क. पूरेतपमे विजने ।
3. क. विरह ।
4. ग. लिङ्ग वा रङ्ग ।
5. क. दृशो ध्वनि ।
6. ग. गरूषता ।
7. क. किं ते गराशयः ।
8 क. तं निधुवन ।
9. ग. मुञ्चन्ती ।

## पञ्चाशत्तमः प्रबन्धः

( मल्लाररागेण गीयते )

लोकय[1] भवदनुरूपं पुनरपि तस्या रूपम् ।
नभजगतागतिपीड़ा मुदयतु न तव व्रोड़ा ॥
अपसर निर्दयकामं मयि च समाचरवामम् ।
न पुनरुपैमि निवासं तेन न याम्युपहासम् ॥

॥ ध्रुवपदमिदम् ॥ १ ॥

विगलति ममतापाशे त्वयि मम हृदि च निराशे।
सम्प्रति भवतु सकामा सा तव[2] दयिता वामा ॥ २ ॥

निरपत्रपतवलज्जा विशति किमु मयि सज्जा ।
कलयदिदं तव वृत्तं तपते यन्मम चित्तम् ॥ ३ ॥

अनुकुरुतेऽशनिपातं मयि भवदोरितजातम् ।
नृपपुरुषोत्तमगोतं सुखयतु सरसमुतेतम्[3] ॥ ४ ॥

एता मारुतविप्रकीर्णविकसद्भूयः प्रसूनान्तर—
प्रच्योतन्मधुविप्रषो दिनमणेश्छिन्दन्ति रोचिष्क्रियाम ।
एतस्मिन् शिशिरर्त्तु कर्मणि ततः स्मेराननाम्भोरुह –
स्तस्याः सम्प्रति दन्तकुन्दकलिकोद्भेदं न किं प्रेक्षसे ॥ १४ ॥

वाता वान्तु पिका नन्दन्तु मधुपा हुङ्कारमातन्वता—
मुन्मीलन्तु रसालसालमुकुलाः कामानलोद्दीपनाः ।

---

1. ख. लोकलय।
2 क. वत।
3. ख. ग. रससमुपेतम्।

तस्याः सङ्गमहासवेन भवतः स्वर्लोकसीमन्तिनी
सख्येनापि मम प्रियं यदधुना भूयो विधास्यन्त्वमी ॥ १५ ॥

इति प्रवृत्तैर्बहुविप्रलापै –
रवेक्ष्य राधामकृतप्रसादाम् ।
विनिःश्वसन् दीनमनाः कथञ्चि –
दावर्त्तित[1] स्व भवनं मुरारिः ॥ १६ ॥

इति श्रीपुरुषोत्तमदेवगजपतिमहाराजकृतेऽभिनवगीतगोविन्दे
महाकाव्ये खण्डितावर्णने विलक्षपुण्डरीकाक्षो
नाम सप्तमः सर्गः ।

---

1. क. ख. कथंचिन्मावर्त्तित ।

# अष्टमः सर्गः

## अकुण्ठवैकुण्ठः

अथानुनीय प्रणयप्रसाधनै—
श्चिरं वचोभिर्विमुखे हरौ गते ।
प्रबोधयन्तीमनुकूलया गिरा
मिथो बयस्यां निजगाद राधिका ॥ १ ॥

### एकपञ्चाशत्तमः प्रबन्धः

( देशीरागेण गीयते )

केलिलालसमनसमुपचितमदनबाधाम् ।
हरिहरि तदनुसरणपरायणामकृतापराधाम् ॥
सहचरीमनपेक्ष्य मामपि सबहुमानम् ।
हरिहरि समभिदधे हृदयगतदयिताभिमानम्[1] ॥
विप्रियं कति तेन न कृतं मयि सकामम् ।
हरिहरि किन्तु तिष्ठति जीवितं मम तदपि वामम् ॥

॥ ध्रुवपदमिदम् ॥ १॥

यदधियमुनाकूलमांसल[2]तिमिरपुञ्जम् ।
हरिहरि प्रणयवचसागममहं तव केलिनिकुञ्जम्[3] ॥

---

1. ख. ग. दयिताभिधानं ।
2. क. मंसल ।
3. ख केलिकुञ्जम ।

ज्यधिन तत्र मुहुःमहं मम विप्रलम्भम् ।
हरिहरि काचनानुवभूव सुरतसुखोपलम्भम ॥ २ ॥

कुञ्जधामनि तदुपगमनलिनाशयाहम् ।
हरिहरि मण्डना परिकर्मनिर्मितरुचिरदेहम् ॥
व्यरचयं रतिशयनमपगतमानलज्जा ।
हरिहरि रजनीमनयं तदनु परमिह वासमज्जा ॥ ३ ॥

आगतो दधदपरतरुणीसुरतमोदम् ।
हरिहरि ससविधं मम दर्शय न[1] प्रणय पनोदम् ॥
नीलगिरिपतिकेलिकुतुक कथाभिरामम् ।
हरिहरि पुरुषोत्तम नृपतिगीतं दिशतु कामम् ॥ ४ ॥

धन्यानामसवः प्रयान्ति[2] शिथिले प्रेम्णि प्रियस्य स्वयं
मध्या जीवितमुत्सृजन्ति[3] सहसा मानेन वामभ्रुवः ।
यन्नाद्यापि जहाति जीवितमिदं मानापि मुञ्चामि त—
न्न्यक्कारं बहुधानुभूय सखि मां धिक् दारुणां तच्च धिक् ॥ २ ॥

दुस्त्यजं तमवगत्य राधिका
दुग्रहं सहचरी मुखात्ततः ।
यामुनेऽथ रहसि स्थितस्तटे
निर्विवेद मधुसूदनः पुनः ॥ ३ ॥

---

1. ख. दर्शयन् ।
   ग. दर्शयताशपयानोदं ।
2. ग. प्रयान्तु ।
3. ग मुत्सृजन्तु ।

## द्विपञ्चाशत्तमः प्रबन्धः

( गौड़ीरागेण गीयते )

केलिकर्मणि जनितनर्मणि यन्मयानुचितं कृतम् ।
सपदि तेन तदियहृदयं रोषकीलककीलितम् ।
सा यदा परिहाय सङ्गं मानिनी मम निर्गता ।
श्वसितुमैहत नहि तदा गुरुभावविच्युतिदुर्गता ।।
किं मुधा परिकोपिता बत सा मया कृतबुद्धिना ।
सविनयं पुनरनुगतापि न[1] कथमनायतवेदिना[2] ।।
।। ध्रुवपदमिदम् ।। १ ।।

उत्तरङ्गयितुं न यदि मयि लोचनं धृतिमोचनम्[3] ।
सा यतेत तदा न धारयितुं क्षमे हतजीवनम् ।।
लोकये यदि न हिमकरमदगञ्जनं हृदरञ्जनम्[4] ।
तन्मुखं नयने तदफले[5] स्मरविकाराञ्जनम्[6] ।। २ ।।

धृतसुधारसनिर्झरं मधुरं पिबामि न तदधरम् ।
यदि तदापनयामि कथमेव निर्भरं स्मरसंज्वरम् ।।
पृथुकुचाचलयुगलमधुना परिरभे निविड़ं कथम् ।
येन परिपीड़यितुमीशे हृदि गतं मम मन्मथम् ।। ३ ।।

---

1. क न पुनरनुगतापि न ।
2. ग कथमनायति वेदिना ।
3. क. धृतिमोचनमित्युल्लेखो नास्ति ।
4. क. हृदरञ्जन इत्युल्लेखो नास्ति ।
5. क. तन्मुखं नयदेफल ।
6. क. स्मरविकासञ्जनं ।

भवतु कथमचिरेण मयि रतिरङ्गकौतुकसंकथा ।
मृगदृशो न समेति मम शर्मभितरथा विरहव्यथा ॥
नीलगिरिपतिसम्मदं तनुतादिदं विरहोदितम् ॥
राधिकागुणचिन्तने नृपपुरुषोत्तमभाषितम् ॥ ४ ॥

वदनकमललक्ष्मीमक्षमो दातुमस्याः
निज शिरसि निधत्ते गौरवादिन्दुमीशः ।
विमलनयनकान्त्या निर्जितं कान्विगीक[1]
मृगमपि भजमानं पाणिपद्मे निधत्ते ॥ ४ ॥

अथानुनेतुं पुनरुत्कया धिया
सखीं पुरस्कृत्य जवेन माधवः ।
क्वचिन्मिथः कुञ्जवने निषेदुषो —
मुपेत्य दीनां निजगाद राधिकाम् ॥ ५ ॥

## त्रिपञ्चाशत्तमः प्रबन्धः

( मलह्वारीरागेण[2] गीयते )

न कुरु सुधाकररुचिमददमनं वदनमुदश्वदरुणिमपदम् ।
पदजितमपि तव धृतमुखशोभं मुदमुपगच्छति कोकनदम् ॥
परिहर रुष[3]मुररीकृततोषं प्रणयिनी पूरय मम कामम् ।
कामयसे कियदनुभावयितुं विरहं दारुणपरिणामम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

---

1. क. कान्विशीकम् ।
   ग. कान्दीशीकम् ।
2. क. ख. ग. मलहरी रागेण ।
3. क. रूप ।

कनककुम्भरुचि हरपरमागं पीनपयोधरयुगलमिदम् ।
नयनकमलगलदञ्जनमलिनं जनयति मृन्मयकलशमिदम्[1] ॥ २ ॥

अभिनवचम्पकदामविनिन्दकमिदमवलोकय तव सुभगम् ।
मृदितं पङ्कभवं विसमधुनाऽ[2] नुहरति[3] मृदुभुजवल्लीयुगम् ॥ ३ ॥

गलितरुचिश्रवसमुद्गक[4]लीलं[5] भूषयितु[6] कलयाभरणम् ।
नृपपुरुषोत्तमरचितं गीतं गमयतु हृदयं हरिचरणम् ॥ ४ ॥

कान्तिः काञ्चनकेतकीपरिणतिर्द्धत्ते रुचिं पाण्डरां
सन्तापेन तनुत्वमङ्गलतिका तन्वङ्गि ते नीयते ।
चित्तं व्याकुलयत्यहेतुकमिदं रोषानलोज्जृम्भितं
तारुण्यप्रियबन्धुरद्य मदनः कामं तनोतु प्रियम् ॥ ६ ॥

कान्ते रक्तोत्पलदलरुचो लोचने चारुणी ते
भ्रूकौटिल्यं स्मरनटकृतं ताण्डवं न[7] व्यनक्ति ।
रागश्चित्ते भवतु सुभगो दुर्मुखं त्वं च रम्य
वक्षोजाग्रे पुनरभिमतं तद्द्वयं नाननेन्द्रौ ॥ ७ ॥

---

1. ख. ग. मदं ।
2. क. मृदितं पङ्कभवं दिशतु मधुना ।
   ग. मृदितं पङ्कभवं विश मधुना ।
3. ख. नुहरति ।
4. ख. ग. गलितरुचीवसमुद्गक ।
5. क. लीनं ।
6. क. भूषयन्तं ।
   ख. भूषयतं ।
7. ख. च ।

## चतुःपञ्चाशत्तमः प्रबन्धः

( तोडीरागेण गीयते )

कुन्तलालि[1] समाकुलं वदनं नवीनमयसुन्दरम्[2] ।
पिदधता तमसेव हृदयं संवृतं मम शशधरम् ॥
भवति भवती जीवितं परममिमतं मम दैवतम् ।
सहचरे भवदनुचरे मयि न तव मौनं तदुचितम् ॥

॥ ध्रुवपदमिदम् ॥ १ ॥

चञ्चलं नयनाञ्चलं कुरु मयि विनिश्चलतारकम् ।
विकचकमलदलान्तसङ्गत[3]मधुकरभ्रमिकारकम् ॥ २ ॥

मधुरहसितरुचा परिष्कुरु सादरं मृदुलाधरम् ।
विम्बफलमिव परिणतं शशिरोचिषादरपाण्डरम् । ३ ॥

किमपि वद पिकसंघसंचितपञ्चमस्वरसुश्रवम् ।
पुरुषोत्तमनृपतिगीतं भवतु हरिचरिताश्रवम् ॥ ४ ॥

समुल्लसति मल्लिकाकुसुमतारकासंकुला
सुकेशि कवरीभरच्छलमिलत्तमो[4] वल्लरी ।
उदञ्चय मनोरमं वदनचन्द्रविम्बं द्रुतं
विकासमयतादिदं[5] तव च लोचनेन्दीवरम् ॥ ८ ॥

---

1. क. कुन्तलानि ।
2. क. नवीमयसुन्दरम् ।
   ग. नविमयसुन्दरम् ।
3. ख. दलान्तलसङ्गत ।
4. क. छ्लमिनोत्तमो ।
5. क. मयतामिदं ।

## पञ्चपञ्चाशत्तमः प्रबन्धः

( नटनारायणरागेण गीतते )

विजितरतिरुचिमदमुदं भवतीं निशान्तम् ।
भजति मयि मदनो विमुञ्चति बाणजातम् ॥
भवतु सदयं न तव हृदयं विप्रतीपम् ।
सुमुखि भव मम शरणमयि मयि मुञ्च कोपम् ॥

॥ ध्रुवपदमिदम् ॥ १ ॥

श्वसितमरुतापहृतमिति सहजाभिरामम् ।
सौरभं मम दहति तनुमनिलोऽपि कामम ॥ २ ॥

अङ्गहारविनिन्दिताखिला वल्लीलीला ।
भवति मयि मधुसम्पदहिताचरणशीला ॥ ३ ।

हरिकथाकलनेन सहृदयहृदयगम्यम् ।
श्रीपुरुषोत्तम[1] नृपतिगीतं भवतु रम्यम् ॥ ४ ॥

विश्राम्यन्ति मधुद्रवाः सुमनसां वाष्पप्रवाहा न ते
प्रस्यन्दं वकुले जहात्यलिकुलं न भ्रूयुगे ताण्डवम् ।
उत्फुल्लाः करुणद्रुमा न करुणा धत्तेऽपि मय्यङ्कुरं
कालः शेषमयं मया च गमितो हा नैव मानस्त्वया ॥ ६ ॥

राधयो किमपि वक्तुकामया
वेपमान नवपल्लवत्विषि ।
कम्पितेऽधरपुटे हरिस्तदा
भूय एव भणितुं प्रचक्रमे ॥ १० ॥

---

1. ख. पुरुषोत्तमपुर्वं श्रीति उल्लेखो नास्ति ।

कान्ते[1] कस्य ममैव नाहमिमरा मा जीवितेशोऽस्मि ते
न त्वं दण्डधरः परं मम मनोराज्ञाने त्वनप्रियम् ।
नेदं प्राणविपर्ययेऽमिलितं माने त्यज को हेतु
यामो नं तदुपैमि कालनगरीं नकिं विश्राम्ये वद ।। ११ ।।

प्रतिवचनदानविमुखं च लितायामन्यतोऽथ राधायाम् ।
मधुमथनो निजभवनं परिभवदूनः पुनस्ततो निरगात् ।। १२ ।।

प्रसरति निदाघसमये मानम्लानां मिथो विषीदन्तीम् ।
सन्निधिमागत्य सखी पुनरपि राधामिति प्रोचे ।। १३ ।।

## षट्पञ्चाशत्तमः प्रबन्धः

( कर्णाटरागेण[2] गीयते )

कुसुमसम विचिनोति[3] लीला रचिता किं सखि न विशाला ।
रविकरदुःसञ्चरणं विपिनं सम्प्रति दारुणझञ्जापवनम् ।।
निर्झरहिमजलविहरणं कर्त्तुं सहचरीरमणम् ।
अनुसर गुणमणि सहजनिधानं विदितकुसुमशरतन्त्रविधानम् ।।
।। ध्रुवपदमिदम् ।। १ ।।

तव चरणाहतिजातं न समधिगतमिव मुखजातम् ।
विगतकुसुममिह दानमशोकं पश्य पराञ्चितमधुकरलोकम् ।। २ ।।

निर्भरसुरतनिदानं न कृतं सखि मधुपानम् ।
तदनुचितं रतिमन्ये मदने सम्प्रति धर्मजतापासहने ।। ३ ।।

---

1. ख. कन्ते ।
2. ग. कन्नाटरागेण ।
3. ख. विचिति लीला ।
   ग. कुसुमसम वर्चितिलीला ।

गेन त नम। रमात्रं स्मर न जनो न हे पिकरावम
कुलनं[1] नम्र[2] भवन्या गीतं जगति नृपति पुरुषोत्तमगीतम् ॥ ४ ॥

मधुवशमधुपानोत्काश्मङ्कारनाद
प्रचित शुकगिरस्ते कण्ठमेवामनीताः ।
सखि मधुदिवसाः किं साम्प्रतं पाटलाना—
मपि न घनविकासः[3] प्रेक्षते साभिलाषम् ॥ १४ ॥

## सप्तपञ्चाशत्तमः प्रबन्धः

( भैरवरागेण[4] गीयते )

वनमिव[5] दवदहनो भयविद्रुतवनचरसत्त्व नकायम ।
दहति[6] भृश विधुरमयं रोषशिखी सखि तव हृदयम् ॥
रचय चरित[7]मनुकूलं मानं कलय न हृदि शूलम्[8] ॥

॥ ध्रुवपदमिदम् ॥ १ ॥

---

1. क ग छलिकं ।
2. ग. तन्व ।
3. ख धननिवास ।
4. ग. भैरवीरागेण गीयते ।
5. क. वदनमिव ।
6. ख. वहति ।
7. क. चरति ।
8. क. हृदिशूलं ।

खरतररविकरसङ्क्रमणादिव पिङ्गलपल्लवजातम् ।
भजति चिरं गोपमिदं तव वपुरुपरचितगुरुखेदम् ॥ २ ॥

शतमखदिग्गतपवनसमुद्गतधूलिभिरिव मुदुवल्ली ।
इयमधुना तडिदामा धूसरिता तव तनुशोभ ॥ ३ ॥

कियदनुगतमवधीरित वयसिरमणमनुज्झितमावम् ।
दिशतु मुदं प्रणयपदं नृपपुरुषोत्तमगीतमिदम् ॥ ४ ॥

स्फुटन्ति ग्रावाणस्तपनकिरणैर्न स्फुटति वा
कथं चित्तं तस्य ज्वलति विरहाग्नौ तु मृदुलम् ।
वराहाणां पङ्के प्रविशति कुलं घर्मविधुरं
न पङ्कं काश्मीरं स्पृशति च हरिः संज्वरभयात् ॥ १५ ॥

दार्वाघाटनिकुट्टनेन सदृशी नीता मदभ्यर्थना
वैयर्थ्यं गणिताः[1] न ताः प्रणयिनश्चाटूक्तयः सन्तताः ।
स्वीयं च वसनं[2] त्वया सखि न चेत्संभाव्यते दुःसहं
प्राणेभ्यः शतशः शपे यदि रुषं न त्वं प्रिये मुञ्चसि ॥ १६ ॥

---

1. क. गमिता ।
2. ख. ग. व्यसनं ।

दृष्टिभङ्गिगमितप्रसादया
स्निग्धया मृगदृशाथ मुग्धया ।
किंचिदुल्लसितगण्डमण्डला
राधिकासहचरी निरैक्षत ॥ १७ ॥

इति श्रीपुरुषोत्तमदेवगजपतिमहाराजकृतेऽभिनवगीतगोविन्दे
महाकाव्ये मानिनीवर्णनेऽकुण्ठवैकुण्ठो[1]
नामाष्टमः सर्गः ।

1. ग वर्णने सोत्कण्ठवैकुण्ठो ।

# नवमः सर्गः

## अनुकूलराधः

हुंकृतैर्मधुलिहामथ स्मरे
मालतीकुसुमबाणमुज्झति ।
राधिकां पुनरुपेत्य सा सखी
वाचमित्यविकथामुदैरत ॥ १ ॥

उद्यत्फुल्लकदम्बडम्बरसटाटोपस्फुटत्कन्दलो
पुच्छः केतकपुष्पतीक्ष्ण[1] नखरः कुन्दप्रसूनः श्रुतिः ।
जातिकुट्मल[2] दन्तसन्ततिरयं पञ्चास्य लीलायितं
धत्ते सम्प्रति पान्थमत्तकरिणो हन्तुं पयोदागमः ॥ २ ॥

### अष्टपञ्चाशत्तमः प्रबन्धः

( वङ्गालरागेण[3] गीयते )

प्रियसमागमपथविलोकनवलितचित्ता ।
देहलीमनुसृत्य सततं सन्निवृत्ता ॥
सपदि दिशि दिशि शृण्वती कलकेलिनादम् ।
श्रुतियुगं पिदधाति विकला कलितखेदम् ॥

---

1. क. केतकीतीक्ष्णपुष्प ।
2. क. कुड्मल ।
3. ख. ग. वङ्गालवराडीरागेण ।

निधनमपि सखि नैवमनुते दुर्विधानम्[1] ।
पथिकतरुणी किमुत गणयति सुखनिदानम् ॥

॥ ध्रुवपदमिदम् ॥ १ ॥

विरमति क्वचिदपि हिमसमये वारिधारा ।
सन्ततं सा भवति परिगलदश्रुपूरा ।
शङ्कते दयिते कमपि गुरुमन्तरायम्
भारमिव विरहेण वहति स्वीयकायम् ॥ २ ॥

विमति[2]पदमिति न परिकलयति रत्नभूषा ।
लम्बमानालकमुखी धृतकण्ठशोषा[3] ।
दयितगुणगणनया कृतवदनमुद्रा
रजनीमतिवाहयति चिन्ताविरतनिद्रा ॥ ३ ॥

नभसि विलसति नदति वर्षति[4] मेघजाले ।
भ्रमति रोदिति सा प मुह्यति बत कराले ॥
नीलगिरिपतिरचितचिन्तनयाभिरामम्
पुरुषोत्तमनृप तगीतं जनयति कामम् ॥ ४ ॥

पङ्काविलेऽवनितले बहुतां गतानि
तूर्णं जलानि कमलानि निमज्जयन्ति ।
यच्छ्रीमतामपि जलाशयसंश्रितानां
प्रायो मिलन्ति विपदः सहसा जनानाम्[5] ॥ ३ ॥

---

1. क. तदुर्विधानम् ।
2. क विमिति ।
   ग. विरमति ।
3. शोषा = शोषयेन कामवायेन शुष्यते इति शुष् घञ् आच् ।
4. ख. कर्षति ।
5. ख. जलानां ।

आनीतमभिनवकुसुमावलि[1] तरुणे सालिजालमनुयाते ।
शोचति मल्लीवल्ली प्रोषितदयितेव विच्छाया[2] ॥ ४ ॥

## एकोनषष्टितमः प्रबन्धः

( मुखारीरागेण गीयते )

अर्द्धतनुमयवामनयनं विषमनयनं शासनम् ।
व्यधित यस्य मनोभुवं प्रति तमपि विजयिशरासनम् ॥
यत्र सहचरभावमयते नवघनाघनमण्डनम् ।
प्रकटयन् धनुरमरपतिरमर रिमण्डलखण्डनम् ॥
इह हि मन्मथसुहृदि समये विन्दति प्रियसङ्गमम् ।
कामिनीकृतसुचरिता सखि जनितनिर्भरविभ्रमम् ॥

॥ ध्रुवपदमिदम् ॥

सजलकणहिमपवनकृतजडमानसुरसिरुहोष्मणा ।
का मनोपनयन्ति सदृशा मशिशिलाहितवर्म्मणा ॥
मदकले जलकूलनीड़ग[3]कालकण्टककूजिते ।
रहसि हृदयं मणितमभ्यसितुं नवोढ़ानि दधते ॥ २ ॥

नभसि जलदारम्भसम्भूति वहलतिमिराड़म्बरे ।
रमणभवनाभिमुखवाहिनो पथि विलोकनभीकरे ॥
मुहुरुदञ्चितचञ्चलारुचिदीपदर्शितवर्त्मना ।
मृगदृशामपनीयते भय मतनुशम्बरघातिना ॥ ३ ॥

---

1. ख. ग. कुसुमामलि ।
2. ख. प्रोषितदयितेदिविच्छाया ।
3. क. जकूलनीड़प ।

मधुरातपतापरुजया[1] निर्भरं न कृतं रतम् ।
प्रगुणमधुना मन्मथेन तदविरतं किमु मच्चितम् ॥
हरिकथामनुचिन्तितं[2] यदि भवति हृदयं सादरम् ।
पुरुषोत्तमनृपतिगीतं शृणु तदा रसबन्धुरम् ॥ ४ ॥

उदुगर्जितेन पटहानिव वादयन्ति
मेघाः किरन्ति[3] करकाकपटेन लाजाः ।
हर्षात्पठन्ति[4] जयघोषमिवातिमात्रं[5]
क्रौञ्चद्विजा विजयिनि स्मरभूमिपाले ॥ ५ ॥

प्रणयिनि विलम्बमाने प्रतिभयशङ्काधिशङ्कुभिन्नहृदयः[6] ।
प्रोषितपथिको ऽस्मिन् विहितसपर्या स्तुवन्ति गिरितनयाम् ॥ ६ ॥

## षष्टितमः प्रबन्धः

( आम्रपञ्चमरागेण[7] गीयते )

शूलविदलितमहिषदितिसुतहृदयभागे ।
निहतशतमुखकान्तिहिमकिरणोपरागे ॥
कलितशवरीरुपवलयित[8]शेषनागे ।
गिरिशजीवनवितरणप्रथितानुरागे ॥
सहजभावविनीर्णनिजतनुभागवर्गे ।
कुरु मनोरथमवितथं लघु देवि दुर्गे ॥ १ ॥

॥ ध्रुवपदमिदम् ॥ १ ॥

---

1. ख तापरजया ।
2. ख. मनुरन्तितु ।
   ग. मनुचिन्तित ।
3. क. कियन्ति ।
4. क. वर्षाः पठन्ति ।
5. ख. जयघोषमिमेतिमात्र ।
6. ख. हृदः ।
7. क. ख, ग अपरपञ्चरागेण ।
8. ग. कलयति ।

अरुणागमनविलोकमयान्तरनागतारे ।
गगनतलपरिकीर्णपिङ्गलचिकुरभारे ॥
प्रेतजम्बुककृकवधूगणसपरिवारे ।
चण्डिके नरमुण्डमण्डलरचितहारे ॥ २ ॥

सततचिन्तनयोगसहजसमुदितमाने ।
त्रिगुणमयतनुकल्पिताखिलभवविधाने ॥
विविधरूप[1]परिग्रहकृतमयविताने ।
कालरजनी यथासमयजतिावसाने ॥ ३ ॥

भुजगपतितनुशयितमुररिपुयोगनिद्रे ।
विनतजनकृतकामनामरवल्लि भद्रे ॥
देहि मतिमिह कथितमाधवकेलिमुद्रे ।
पुरुषोत्तमनृपतिगीते भावमन्द्रे ॥ ४ ॥

धारापातैरुपवनभुवो मम रारावघोरैः
प्रभ्रस्यद्भिर्गिरिपरिसरान्निर्झरौघैर्भृगुभ्यः ।
पान्थस्त्रीणामिह जनपदामुक्तकण्ठैर्विलापैः
सम्पद्यन्ते सतत मुखरा रुद्धकर्णान्तरालाः ॥ ५ ॥

## एकषष्टितमः प्रबन्धः

( सालंकनाटरागेण[2] गीयते )

पथिकजनहृदयानि तमसा विरहविक्लवमासते ।
येन तानि विवेकदीपजबोधमणुमपि विदधते ॥
तदिह सहचरी नियति-वञ्चित-चेतसो न मुधासितुम् ।
समुचितं तव लघुपदं दयितं तमभिसरविलसितुम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

---

1. क. विविधिरूप ।
   ख. विधिरूप ।
2. क. ख. ग. सालगनाटरागेण ।

प्रेयसोकुलव[1]वदनमलिनं वीक्ष्य जम्बूफलभरम् ।
कुररुतमनुकुर्वते शुचमेत्य पथिका निर्भरम् ॥ २ ॥

इन्द्रगोपकुलं विराजति दूर्वविदलिते भूतले ।
निहितमस्त्रं दहनमिव मदने न विरहिजनेऽखिले ॥ ३ ॥

यादसामलमेधते कुलमध्वनीनजनाधिना ।
कृतमिदं नवगीतमुदयति पुरुषोत्तमनृपतिना ॥ ४ ॥

क्षामप्रकोष्ठविगलद्वलयप्रपात
भीत्या वियोगिवनिताः करपल्लवेन ।
ताटङ्कमाशु दधति स्खलितं श्रुतिभ्यां
स्वश्वयसे प्रियतमस्य गतस्य दूरम् ॥ ८ ॥

## द्विषष्टितमः प्रबन्धः

( गुर्ज्जरीरागेण गीयते )

तपसमयाकुलभूरुहसंमिलदविरलनवदलमालम् ।
विपिनतललोकनरमणीचिन्तन शोचनपथिकविमोहकरम् ॥
दयितसमागमसमयविनिर्गम[2] शोचमोनतरुणीपृथुसम्भ्रम—
रचितशकुलशतवोधपरिश्रम दुःखविधानपरम् ॥
पश्य जलदसमयं सहचरि जनितभयम् ।
अभिसर दयिततमं प्रति सम्प्रति भवदनुगतहृदयम् ॥

॥ ध्रुवपदमिदम् ॥ १ ॥

---

1. ख. ग. कुच ।
2. क. विनिह्नित

कापि विनिन्दति नियतं नन्दति
न सहचरीकुतुकेषु न विन्दति
धृतिमरविन्दति चिन्तासन्तति सरिति पथकसुमुखी ।
त्वमपि मदनवनपालसमुपचित[1]
सहजरागभरदोहदसञ्चित
यौवनतरुफलभोगे सम्प्रति वससि किमिह विमुखी ॥ २ ॥

गगनतलाजिरविहरदम्बुधर
सम्भरलक्ष्माचलवसनाञ्चल—
रुचिसममाशुगविजयपताका वल्लोरुचं विमङ्गा ।
समदवलाकावलिमनुकुरुता—
द्यमधुना तव कुचयुगानिहिता
हारलता रतेसङ्गरसन्ततपौरुषकृतिलोला ॥ ३ ॥

मणितगुरौ तव कुक्कुभपक्षिणि
नदति[2] कुलं सुरतश्रमहारिणि[3]
किरति जलं पवने रतिभवने विलस रहसि सुभगे ।
रसवलितं ललितं पुरुषोत्तम—
गजपतिना विरचितमिति गीतं
दिशतु विनिर्मलसज्जनहृदयं मुररिपुचरणयुगे ॥ ४ ॥

लीयन्ते सहजारयोऽपि मे लिता भूमेभृतां कन्दरे
क्लिन्नाङ्गा हिममारुतव्यतिकरव्याकम्पिनो जन्तवः ।
विद्युद्वल्लीतरङ्गितक्षणभिया गाढं निरुध्य श्रुतौ
गर्जत्यम्बुधरे च गर्भभवनं धावन्ति पान्थस्त्रियः ॥ ६ ॥

---

1. ख समुचित ।
2. क नन्दन्ति ।
3. क वारिणि ।

रतितन्त्रनियामकप्रयोगे
नवतारुण्यमवाप्य कर्णधारम् ।
तरणीं तरुणीमधिश्रयन्त–
स्तरुणाः कामपयोधिमुत्तरन्ति ॥ १० ॥

करकापुष्पविशिखानुल्लास्य सुमनो धनुः ।
वर्षत्यम्बुदकन्दर्पे राधिकामिदधे सखीम् ॥ ११ ॥

## त्रिषष्टितमः प्रबन्धः

( ककुभरागेण[1] गीयते )

बहलपरागसमूहकराजे मदनकृताखेटककाले ।
केलिकलाकलिता किं न मया मधुदिवसे हत वेधिवशाया ॥
न चटुलचाटुरतं[2] यमपश्यं न तमपि विनतासुतकेतुम् ॥
सम्प्रति कथमुपयामि च सविधं तस्य वदामि किमनुनेतुम् ॥

॥ ध्रुवपदमिदम् ॥ १ ॥

प्रियकरकृतमृदुमृगमदलेपं न किमिति धारागृहवासम्[3] ।
व्यरचयमनयं परमद्युतिखर[4] रुचितप्ता शुचिमासम्[5] ॥ २ ॥

कुसुमशरो रमयितुमिह मुञ्चति निजकेतनमपिमपरोधम् ।
कथमधुना निवसामि विना तं दयितं क्षणमपि सखि मोघम् ॥ ३ ॥

---

1. ग. ककुभरागेण ।
2. क. चटुचाटुरतं ।
3 क राधागृहवासम् ।
4. क ग परमहिमद्युतिखर ।
5. ग. शुचिवास' ।

इह हि यथा रमणेन न रमितं वञ्चितहृदया सा विधिना ।
इदमुपरचितं[1] मुञ्चयतु गीतं पुरुषोत्तमनृपगजपतिना ॥ ४ ॥

एतर्हि केनक शेम्ना[2] करपत्रभिन्ने
विच्छेदिनि हृदयदारुणि वामनेत्राः ।
कान्तप्रणीतमदनोत्सवकर्मरम्ये
हर्म्योदरे रतिकथाः कलयन्ति धन्याः ॥ १२ ॥

## चतुःषष्टितमः प्रबन्धः

( रेवगुप्तिरागेण[3] गीयते )

भजमानामृदुपदपङ्कजसम्वाहनविधिना ।
अनुकूलं विदधे दयितं तमुपयातमधुना ॥
न कुरु चिरं प्रणयपरं सखि सरभसमनुनयकान्तम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

अभिसरणे निशि पथि लग्नं चरणनवकिशलये ।
अङ्कगते पङ्कबहलं वसनेनापनये ॥ २ ॥

अभिधातुं पुनरनुचितमिति सशपथपदपातम् ।
रचयेऽयं तदनुवदामि च मधुरवचनजातम् ॥ ३ ॥

अनुपगते[4] प्रणयिनि न धृतिं क्षणमपि हृदि कलये ।
भवतु चिरं नृपपुरुषोत्तमगीतं शुभमतये ॥ ४ ॥

---

1. क. इदमुपचरितम् ।
2. क. कैतकीमसि ।
3. क ख. ग. रेवगुप्तिरागेण ।
4. ख. अनुपमिते ।

आनन्दयामि नयने परिमार्जयामि
तापं मनोरथशतं सखि पूरयामि ।
निर्वापयामि हृदयं सफलीकरोमि
जन्माद्य केलिभवने दयितं प्रपन्ना ॥ १३ ॥

इति श्रीपुरुषोत्तमदेवगजपतिमहाराजकृतेऽभिनवगीतगोविन्दे
महाकाव्ये प्रोषितभर्तृकावर्णनेऽनुकूलराधो
नाम नवमः सर्गः ।

# दशमः सर्गः

## सानन्दमुकुन्दः

अथ मदनतापदूनं विप्रियमनुशोच्य मुक्तजनसङ्गम् ।
निजगाद सा वयस्या मधुसूदनमेत्य राधिकानुनयम् ॥ १ ॥

प्रमोदमानेन मुरारिणा ततः प्रसूनवाटीभवनान्तरे मिथः ।
विधाय रन्तुं समयं विसृज्य तां सखीमुपस्थीयत तत्र रंहसा ॥ २ ॥

अन्तः प्रमोदमसृणो लसदीक्षणान्ता —
मुत्फुल्लगण्डफलकामवनम्रवक्त्राम् ।
राधां मुरारिरवलोक्य सखी जनेन
सङ्केतवेश्म तदुपागमितां जगाद ॥ ३ ॥

### पञ्चषष्टितमः प्रबन्धः

( सोमवराड़ीरागेण[1] गीयते )

वदनमुन्नमयाधुना दरचारुहासम् ।
दुर्दिने हततिमिरमिव विधु[2]मुदितमासम् ॥
प्रविश सुन्दरि केलिमन्दिरमिदमुदारम् ।
पूरयेह मनोरथं मम सुकृतसारम्[3] ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

---

1. क. ख. ग. सामवराड़ीरागेण ।
2. ख. वधू ।
3 क. सुतसारम् ।

लोकनामृतधारया मम सिञ्च देहम् ।
सततमुपचितविरहहुतवहकलितदाहम् ॥ २ ॥

किमपि निगद विपञ्चिका मृदुमात्रगम्यम् ।
मदनकुण्डलिगरलखण्डनमन्त्ररम्यम् ॥ ३ ॥

हरिकथा परिशीलनाय निदधत चित्तम् ।
पुरुषोत्तमनृपतिगीते विमलवृत्तम् ॥ ४ ॥

काश्मीरं मणिमुज्ज्वलघनमसी[1] छायेव ते निर्मलं
कालुष्यं हृदयं निनाय सुभगे मानस्तदा दारुणः ।
युक्तं सम्प्रति न प्रसीद सुहृदो मौनं तव क्रीडितुं
सोऽयं काममहोत्सवस्य समयः प्राप्तः प्रियं भावुकः ॥ ४ ॥

## षट्षष्टितमः प्रबन्धः

( कर्णाटरागेण गीयते )

मृदुलकिशलयकोमलं तव लालयामि सुलोचने ।
तदधुना विनिधेहि शयने चरणमिह रतिरोचने ॥
रचय न चिरमुपैहि भाविनि मदनबाधामोचने ।
भवतु मा तव लज्जितं मयि विरहजज्वरशोचने ॥

॥ ध्रुवपदमिदम् ॥ १ ॥

करतलेन मृजामि वदनं श्रमजलस्नपितालिकम्[2] ।
कमलमिव परिलीनभृङ्गं मञ्जुलालकमालिकम् ॥ २ ॥

---

1. क॰ घनसी ।

2. क. स्नपितालकम ।

सुमुखि संगमयामि विश्लथबन्धनं कबरीभरम् ।
सुमनसा तव कुसुमसायकविशिखकोषमहोदरम् ॥ ३ ॥

दर्पणाकृतिमदनफलके तिलकमलके संवृते ।
पुरुषोत्तमनृपतिगीतं शृणुत मुररिपुसम्मदे ॥ ४ ॥

निधाय त्वामग्रे निजविजयशङ्कितं मम वपुः
शरव्यं कुर्वाणो शशिमुखि रुषा पुष्पधनुषि ।
अपांधारासारा[1] विषमवेशिखोयन्ति परितोऽ—
धुना विस्फुर्जन्ती मयि च दहनायति तडित् ॥ ५ ॥

लज्जया गमनमन्थरक्रियां
सन्निधिं प्रति तदा मुरद्विषः ।
राधिकां सहचरी निरीक्ष्य सा
वाचमेतदुचितां समभ्यधात् ॥ ६ ॥

## सप्तषष्टितमः प्रबन्धः

( कुञ्जरीरागेण[2] गीयते )

न यदुपलम्भमृते बहुमनुते वल्लवतरुणीनिकुरम्बम्[3] ।
जीवितमपि तव सोऽयं सविधे वसति मुधा कुरु न विलम्बम्[4] ॥
अनुसर केलिकलाहितमनसं तमनुगतं निजदयिततमम् ।
क्षणमपि येन विना तव भजते विरहि शिखा सखि न परिशमम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

---

1. क. अपांराधासारा ।
2. ग. कुञ्जरीरागेण ।
3. क, ख. निकुरम्बम् ।
4. क. 'अनुसरकेलि—दयिततम'मित्यत्र (२) गीतसंख्यालिखितास्ति ।

नवतरुणिमरुचिमनुपमरूपं प्रणयमपि प्रियहृदयकृतम् ।
यदभिलषस्यवलाकुलमधुना तदिदमिह त्वयि समुपगम्[1] ॥ २ ॥

उन्मदबर्हिगणनटनविलोकनमुदितकुसुमशरनृपतिरयम् ।
ऋतुरखिलकलानिधिरपि रमणो विफलं किं कुरुषे समयम् ॥ ३ ॥

रमणं समुचितं विजनं भवनं किमपरमधुना कामयसे ।
प्रविशतु हृदयं हरिचरितोदितनृपपुरुषोत्तमगीतरसे ॥ ४ ॥

एतस्मै यदकृत्रिमप्रणयिने प्राणेश्वराय त्वया
यद्वा तुभ्यमनेन[2] यच्च भवतोः प्रीत्यै मया चेष्टितम् ।
एतद्वः फलवत्तया परिणतं तत्साम्प्रतं जायतां
पुष्पेषुः फलितश्रमश्च युवयोः सिद्ध्यन्तु केलिकथाः ॥ ७ ॥

सख्यामथाभिमुख्यं[3] विनिर्गतायां विधाय राधायाः ।
मधुमथनसन्निधाने सहजभावा वभूवुरेतस्याः ॥ ८ ॥

### अष्टषष्टितमः प्रबन्धः

( मध्यमादिरागेण गीयते )

सुरतविलम्बमासेवितुं स्तनितवचनेन घनवृन्दे ।
बोधयति मरुति मदनानलं दीपयति नीपपरिमलवहनमन्दे ॥
राधिकावलितकामा ।
मन्दं मन्दं शयनमभजदभिरामा ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

---

1. क. त्तरुणमपि—समुपगतमित्यन्तमुल्लेखो नास्ति ।
2. ख. मनेक ।
3. ख भिसख्यम् ।

स्फुटकुसुमदामपिहितोदरे वहन्तपरि मन्नद्गुरुधूपे ।
मृदुलघनसाररजसा चेत्रे मर्वति भवने विराद वैमलमणिदीपे ॥ २ ॥

कालकण्ठकविरुत[1] मंकुने केकिकूने[2] कलितकलनादे ।
सविधिवि नेहितकुसुमगर्भके मधुमुदितमधुपकुलझङ्कारवादे ॥ ३ ॥

लम्बया विंवधमणिमालया विमलया चारुणि विताने ।
पुरुषोत्तमनृप तेकृतिरियं विशतु हृदि हरिचरितमनुवर्त्तमाने ॥ ४ ॥

पाणिभ्यां कपटेन बद्धकवरीभारं पुनर्वध्नतो—
मीषद्व्यञ्जितपीवरस्तनतटीं विस्पष्टनाभीहृदाम्[3] ॥
मन्दस्मेरमुखीं विधूनवसन[4]प्रव्यक्तवृत्तोरुकां
राधामङ्कमथानयत्प्रियगिरा संप्रीणयन्माधवः ॥ ६ ॥

राधिकांशुकमपत्रपयेव संव्रते स्म सपदि श्लथनीविः ।
अन्यमन्यत तदा न निरोद्धुं सापि तन्निधुवनप्रतिकूलम् ॥ १० ॥

## एकोनसप्ततितमः प्रबन्धः

( वेलावलीरागेण गीयते )

निविड़कुचपरिपीड़मविरलपुलकिना विपुलोरसा ।
राधिका परिषस्वजे हरिणा तयापि सरंहसा ॥
प्रसरति स्मरसङ्गरे गुरुतरणिमहितमत्सरम् ।
अङ्गमङ्गं सङ्गमयते तदुभयोरपि निर्भरम् ॥

॥ ध्रुवपदमिदम् ॥ १ ॥

---

1. क. कालकविरुते ।
2. क. केलिकुले ।
   ख. ग. केलिकुले ।
3. क. हृदा ।
4. क. विधुनदवन ।

विनिदधे मृदुशयनपदमधि राधिका मधुराधरम् ।
हरिरचुम्बदियं च कलमदशानवमनं सादरम् ॥ २ ॥

राधिकाकुचमण्डलं परिमण्डनं नखरेखया ।
मुरजितातनमिनं करेण च रमणमल्लकमेतया ॥ ३ ॥

तावुभावितरेतरं स्फुरितानि चक्रतुरङ्कके ।
पुरुषोत्तमनृपनिगीतं दधतु मतिमतिनन्दके ॥ ४ ॥

तुमुले रतिसङ्गरे प्रवृत्ते
मुदृशोऽस्याः प्रययौ भियेव लज्जा ।
ववृधे च सहायतां विधातुं
मदनस्तव तयोरमोघधन्यः ॥ ११ ॥

राधिकाथ मणितानि[1] कुर्वती
माधवस्य तनुते स्म सम्मदम् ।
मर्दयन् स च कुचोरुयुग्मकं
तन्मुदं सुरतकर्मकर्मठः ॥ १२ ॥

## सप्ततमः प्रबन्धः

( शुद्धवङ्गालरागेण गीयते )

मृदुनि शयने पुलकमुकुलितं राधिका विनिदधे देहम् ।
तदुरसि च समगमयदङ्कं मुरजिदुपरचितरतिबन्धपरिणाहम् ।
तदुभयोरपि निमग्नम् ।
हृदयमधि रसजलधिगुरुभावलग्नम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

---

1. क. राधिकामणितानि ।
ख. राधिकाथ मणितानि ।

अभवद्दलमलक्तकपद्धाङ्कितं मृगदृशो रमणगलनालम् ।
चलचरणयुगलतलमम्बरे स्थलकमलमिव विकचमुपरचितस्वेलम् ॥ २ ॥

शयनमधिशयितवति वल्लभे पौरुषं चरितमपि राधा ।
कर्त्तुमारभत गुरुसाहसा न विगणितनिजमृदुलतनुवल्लीबाधा ॥ ३ ॥

स्तिमितदरमुकुलितविलोचना सीत्कृतं समतनुत राधा ।
पुरुषोत्तमनृपतिकृतिरियं जयति हृदि जनितपरमानन्दबोधा ॥ ४ ॥

इति विरचितबन्धैः प्रीणयन् प्रेयसीं तां
मुररिपुरपि लेभे सान्द्रमानन्दबोधम् ॥
शिथिलितभुजवल्ली वेपमाना श्वसन्ती
रमणतनुममुञ्चन्निःसहाङ्गी च राधा[1] ॥ १३ ॥

स्वेच्छयापगमसंगमिताग—
स्तन्निचोलमवधीर्य्य रुषेव ।
तावुभौ प्रमुदितौ जगृहाते
सद्य एव मृदुलांशुकमन्यत् ॥ १४ ॥

## एकसप्ततितमः प्रबन्धः

( मिश्रषडजरागेण गीयते )

संयमयामि सुकेशि मनोरमविगलितकवरीभारम् ।
प्रणयमहीरुहफलमिव विदधे चन्दनतिलकमुदारम् ॥
हरिरिति[2]वलितादरम् ।
राधामथ निजगाद समधुरम् ।
॥ ध्रुवपदमिदम् ॥ १ ॥

1. क. श्लोकस्यास्य उल्लेखो नास्ति ।
2. ख. ग. हरिरिति ।

कुटिलविलोकिनि नयने चपले मलिनं तव घटयेयम् ।
अञ्जनमुरसिरुहे मकरध्वजकेतनमपि रचयेयम् ॥ २ ॥

भुजगवल्लीदलमिदमुरसो कुरु रुचिरं सहजसरागम् ।
अधरविम्बमधुना तव सुन्दरी विदधे सन्ततरागम् ॥ ३ ॥

आभरणानि यथापदमिह तव निदधे वपुषि निकामम् ।
नृपपुरुषोत्तमगीतं सुभगं भावयतु प्रियकामम् ॥ ४ ॥

इति विरचितवेशां माधवस्तत्र राधां
कृतदृढ़परिरम्भं प्रीणयंश्चाटुवादैः ।
स्वसविधमुपगन्तुं सङ्गसौख्याय भूयः
सशपथमनुनाथ्य[1] प्राहिणोत्तां कदाचित् ॥ १५ ॥

## द्विसप्ततितमः प्रबन्धः

( मङ्गलगुर्जरीरागेण गीयते )

उद्धृतानगमनिकायं[2] धृतमीनाकृतिकायम् ।
कच्छपवपुषमुदारं धरणीधरणगुरुसारम् ॥
निपतन्निह संसारे कल्मषमलिनाचारे ॥
नौमि भवन्तमपारे[3] जयजय देव मुरारे ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

दशनशिखरधृतगोत्र क्रोलमुदञ्चितपोत्रम् ।
नरहरितनुमतिचित्रं नखरदलितादितिपुत्रम् ॥ २ ॥

---

1. क. नतुमाथी ।
2. क. उद्धृतनिकायशमतिकार्यं ।
3. क. भगवन्तमपारे ।

भूसुर[1]पद्भुनवक्त्रं छलपरिहृतबलिगर्वम् ।
विरचितकुवलयदानं भृगुपतिनुतमसमानम् ॥ ३ ॥

आराधितशितिकण्ठं रामं हतदशकण्ठम् ।
मधुरसुररसमन्तं हलधरमुद्गतवृत्तम् ॥ ४ ॥

करधृतमन्दरशैलं नन्दगोपवरबालम् ।
करसमुदितकरवालं कल्किनमरिकुलकालम् ॥ ५ ॥

दशविधमवदवतारं भवजभयादवितारम्[2] ।
नृपपुरुषोत्तमगीतं सुखयतु सज्जनचित्तम् ॥ ६ ॥

नित्यानन्दचिदात्मकायसहजप्रद्योतमानत्विषे
हृत्पद्मान्तरवासिनेऽखिलजगत्सृष्टिक्रियाहेतवे ।
विश्वत्राणपरायणाय समये तस्यैव संहारिणे
मायाकल्पितमूर्त्तये भगवते देवाय तुभ्यं नमः ॥ १६ ॥

इति श्रीपुरुषोत्तमदेवगजपतिमहाराजकृतेऽभिनवगीतगोविन्दे
महाकाव्ये स्वाधीनभर्त्तृकावर्णने सानन्दमुकुन्दो[3]
नाम दशमः सर्गः ।

समाप्तोऽयं ग्रन्थः

---

1. क. भूसुत ।
2. ख. ग. भवजयादवितारम् ।
3. क. नन्दमुकुन्दो ।

# प्रथमपरिशिष्टम्

## 'क' ग्रन्थपुष्पिका

सकलदेवाधिदेवश्रीमज्जगन्नाथप्रियतनय — सततपरिपालनविध्वस्तविविध— प्रत्यूहनिरपायाकृत-श्रीदुर्गापुत्र-निरन्तरनारायणचरणसरसिजमकरन्दपानलम्पट[1] चञ्चरीक चित्तवृत्ति — श्रीधरापरिरक्षितप्रमदभरभरितमानस—श्रीनृसिंहभक्तिविशेष—समासादित साम्राज्य[2] — लक्ष्माविर्भावितमहामहिमसन्ततवेदान्त[3]निगमवासनावासितनिर्मलान्तः— करण-गजपति-गौड़ेश्वर-प्रभञ्जकलवरग[4] वज्रजलधिमन्थमन्थाचल-निजभुजवीर्य्योपार्जित विपक्षराजपक्षकालिमेति[5] विरुदपदविराजमान-कलवर्गेश्वर वीरवर-वीरकेदार-वन्दीकरण-मोचनसमयसमर्पितकर्णाटराज्य[6] प्राचीनमहाराजचक्रसमुपार्जितमहार्घपेण्डाम नाम मणिपाटकजनितसन्तोषपरिणत-नवकोटि—कर्णाट[7] महीपति-नवकोटिकर्णाटाधीश-यशः[8] समासादित-कट्टारिशार्ज्जिनिति तदीय-विरुदपद नवकोटि-कर्णाटेश्वर[9] स्वचक्रमित्र-निजदुर्विनयामात्य-दुष्टचेष्टालुतातन्तुसन्तानविशकलनप्रचण्डचण्डकर-सूर्य्यवंशकमलविकाश भास्कर-परममाहेश्वर — परमवैष्णव-परमभट्टारक-रिपुराजतोड़रमल्लविषमसमर-निःशङ्क-महाराजाधिराज श्रीपुरुषोत्तमदेव गजपतेरस्यैव वर्द्धमानविजयराज्ये चतुस्त्रिंशदङ्के वैशाख शुक्लप्रतिपदि भानुवासरे समाप्तमिदं पुस्तकम् ।

## उपपुष्पिका

श्रीराधाकृष्णचरणे शरणं भव ।<br>
भीमस्यापिरणे भङ्गो मुनेरपि मतिभ्रमः ।<br>
यदि शुद्धमशुद्धं वा ममदोषो न विद्यते ॥

---

1. क. मकरन्दपालम्पट ।
2. क. समादि साम्राज्य ।
3. क. सन्ततवेदनान्त ।
4. क. कलयरर्ग ।
5. क पक्षिशालिमेति ।
6. क. कन्नाटराज्य ।
7. क. कन्नाट ।
8. क. कन्नाटाधीशयशः ।
9. क. कन्नाटेश्वर ।

श्री मद्रामचन्द्रजगद्गुरो त्राहि माम !
पुस्तकं हरते यस्तु काणो दुःखी भवेन्नरः ।
मृतः स्वर्गं न गच्छेत्स पितरं नरकं नयेत् ।
श्रीधरशर्मणा लिखितमिदं पुस्तकम् । लेखके नास्तिदोषः ।

## 'ख' ग्रन्थपुष्पिका

नमामि ते कृष्णपदारविन्दं प्रपन्नतापोपशमातपत्रम् ।
यन्मूलके ते ऋषयोऽञ्जसोरुं संसारदुःखं बहिरुत्क्षिपन्ति ॥
श्रीगोपीनाथः शरणम् । श्रीकृष्णः शरणं ममास्तु सततं श्रीराधिकावल्लभः ॥

# द्वितीयपरिशिष्टम्

## ग्रन्थान्तर्गतकतिपयरागलक्षणध्यानानि

१—आन्ध्रपञ्चमरागलक्षणम्—

आन्ध्रो जातिसमुत्पन्ना मध्यमग्रामगोचरः ।
गान्धारांशग्रहन्यासः रागः स्यादान्ध्रपञ्चमः ।
नितारः किम्प्रबहुलः करुणाद्भुतरागगः ॥[1]

( ध्यानम् )

युवातसीसूनसमानकान्तिः श्रीखण्डपङ्कार्द्रसमस्तदेहः ।
वीणाप्रवीणोऽमरपञ्चमोऽयं गीतेन मुग्धीकृतदेवराजः ॥[2]

२—आभिरीरागलक्षणम्

धान्ताभिरी धैवतजा रि--हीना च शुचौ प्रगे ।[3]

( ध्यानम् )

वाचालकङ्कणविभूषितबाहुवल्लि—
स्त्रिग्द्रचम्पकमनोहरगात्रयष्टिः ।
श्रीखण्डशैलशिखरे गजमौक्तिकौघै—
राभीरिका विदधती स्रजमिन्दुशुभ्राम् ॥[4]

---

1. सङ्गीतमुक्तावली—।—127.
2. सङ्गीतमुक्तावली—॥—128.
3. सङ्गीतमुक्तावली—॥—59.
4. सङ्गीतनारायण—।—222.

३—ककुभरागलक्षणम्—

षड्जन्यां समग्रहांशान्ता सकम्पान्दोलितस्वरा ।
ककुभा हिमकाले तु गेया सम्पूर्णरागिणी ॥[1]

( ध्यानम् )

पीतं वसाना वसनं सुकेशी वने रुदन्ती पिकनाददूना ।
विलोकयन्ती ककुभोऽतिभीता मूर्त्तिः प्रदिष्टा ककुभस्तथेयम् ॥[2]

४—कर्णाटरागलक्षणम्—

प्रोक्तः कर्णाटरागो मृदुगमधनिको मन्द्रमध्यस्वरस्थो
वादी तीव्रर्षभोऽत्र श्रवणमधुरसंवादिना पञ्चमेन ।
आरोहे दुर्बलो गः प्रविलसति सदान्दोलनं गे प्रयुक्तं
धोवर्जश्चावरोहे विदित इह भवेत्पूर्वकाले निशिथात् ॥[3]

अपरस्तु—

मृदु-गनिधमौ रिस्तु तीव्रोऽशः प-सहायकः ।
गान्धारान्दोलनं यत्र कर्णाटः स निशिस्मृतः ॥[4]

---

1. सङ्गीतमुक्तावली—II—67 .
2. सङ्गीतदामोदरः—पत्रम्—37 .
3. उत्कलसङ्गीतपद्धतिः—पत्रम्—171 .
4. उत्कलसङ्गीतपद्धतिः—पत्रम्—71 .

( ध्यानम् )

कृपाणपाणिस्तुरगाधिरूढो
मयूरकण्ठातिसुकण्ठकान्तिः ।
स्फुरत्सितोष्णीपधरः प्रशान्तः
कर्णाटरागो हरिणान् विहन्तुम् ॥[1]

५—कर्णाटवङ्गालरागलक्षणम—

गान्धारांशग्रहन्यासः षड्जपञ्चमवर्जितः ।
एष कर्णाटवङ्गालः शृङ्गाचेटकवंशजः ॥[2]

( ध्यानम् )

मनोज्ञमौञ्जीगुणगुम्फिताङ्गस्त्वचं दधानो धरणीरुहस्य ।
चण्डः कुमारः कमनीयमूर्त्तिर्वङ्गालरागः शुचिसामगानः ॥[3]

६—कलहंसरागलक्षणम् —

जातो रागप्रियामेलात्कलहंस इतीरितः ।
सन्यास सांशकं चैव स षड्जग्रहमुच्यते ॥
आरोहेऽप्यवरोहे च गवर्ज्यं षाड्वं तथा ।
सरिमपधनिसा सनिधपमरिसा ॥[4]

---

1. सङ्गीतमुक्तावली—II—92.
2. गीतप्रकाशः पञ्चमोल्लासः (OSM—Mss—Mus—3).
3. सङ्गीतमुक्तावली—II—123.
4. उत्कलसङ्गीतपद्धति—पत्रम्—172.

७—कल्याणनाटरागलक्षणम्—

कल्याणमेलसम्भूतोऽवरोहे गधवर्जितः ।
षड्जादिमूर्च्छनोपेतो रागः कल्याणनाटकः ॥[1]

८—काम्बोजीरागलक्षणम्—

काम्बोजी तीव्रगान्धारा गान्धारादिकमूर्च्छना ।
आरोहे मनिहीना स्यान्मध्यांशस्वरभूषिता ।
यदि गान्धारहीना स्यान्मूर्च्छना चोत्तरायता ॥[2]

९—कुरङ्गरागलक्षणम्—

रिस्तु तीव्रतरः प्रोक्तो मस्तु तीव्रतरो भवेत् ।
अति तीव्रतमो गः स्यान्नितीव्रः स्यात्कुरङ्गके ।
षड्जोद्ग्राहेण सम्पन्ने न्यासांशौ षड्जपञ्चमौ ॥[3]

१०—केदारगौड़ारागलक्षणम्—

अथ केदारगौलः स्यात्तीव्रगान्धारसंयुतः ।
रञ्जनी मूर्च्छनायुक्तः रिप्रयोगेन मण्डितः ॥
तथैव मप्रयोगेन पञ्चमांशेन शोभितः ।
आरोहे गधवर्जः स्यान्निस्वरांशः क्वचिन्मतः ॥[4]

११—कोलाहलरागलक्षणम्—

षड्जन्यासग्रहः कोलाहलाष्टक्ककुलोद्भवः ।
मध्यमांशः पहीनश्च कलहे गमकोत्कटः[5] ॥

---

1. सङ्गीतपारिजातम्—पत्रम्—181.
2. सङ्गीतपारिजातम्—पत्रम्—170.
3. सङ्गीतपारिजातम्—पत्रम्—188.
4. सङ्गीतपारिजातम्—पत्रम्—174.
5. संगीतमुक्तावली—II—155.

उन्मत्तपुंस्कोकिलवृन्दरम्यनादस्वरं गायति कृष्णगाथा ।
वशी सदा सर्वपुरः प्रवर्त्ती कोलाहलोऽयं करुणोऽरुणाङ्गः ॥[1]

१२—गान्धाररागलक्षणम्—

गान्धारको मध्यमजो मान्ताश्चैव सपोज्झितः ।[2]

अपरस्तु—

गान्धारको मध्यमजश्चमान्तः सपोज्झितः स्यात्करुणे सदैव[3] ॥

( ध्यानम् )

जटां दधानः कृतभूतिभूषः काषायवासास्तनुदेहयष्टिः ।
सयोगपट्टीकृतनेत्रमुद्रो गान्धाररागः कथितस्तपस्वी ॥[4]

१३—गुर्ज्जरीरागलक्षणम्—

गुर्ज्जरी मालवोत्पन्नाऽवरोहे मनिवर्जिता ।
गश्लिष्टमध्यमोपेता धैवतशिल्प सस्वरा ।
गान्धारमूर्च्छनोपेता दाक्षिणात्या प्रकीर्त्तिता ॥[5]

( ध्यानम् )

श्यामासुकेशी मलयद्रुमाणां
मृदूल्लसत्पल्लवतल्पयाता ।
श्रुतेः स्वराणां दधती विभागं
तन्द्रीमुखी दक्षिणगुर्ज्जरीयम् ॥[6]

---

1. संगीतमुक्तावली—II—156.
2. सङ्गीतमुक्तावली—II—195.
3. सङ्गीतनारायण—I—255.
4. सङ्गीतनारायण—I—256.
5. सङ्गीतपारिजातम्—पत्रम्—172.
6. संगीतमुक्तावली—II—66.

१४—गोण्डकिरीरागलक्षणम्—

षड्जन्यासग्रहांशैषा गोण्डाक्रिमपरिगता ।
रिधहीना दिनादौ च गातव्येष्टरसे बुधैः ॥[1]

( ध्यानम् )

रतोत्सुका कान्तपथप्रतीक्षामापादयन्ती मृदुपुष्पतल्पे ।
इतस्ततः प्रोषितदृष्टिरार्त्ता श्यामाङ्गिका गोण्डकिरी प्रदिष्टा ॥[2]

१५—गौड़ीरागलक्षणम्—

ग्रहांशन्यासषड्जा स्याद्गौड़ी मालवकौशिकात् ।
वीरशृङ्गारयोर्गेया सकम्पान्दोलितस्वरा ॥[3]

(ध्यानम् )

शुचिहरिचन्दनपङ्कै रतिसहितं मन्मथं पुरःकृत्वा ।
गौरतनुर्बहुविधिना गौड़ी परिपूजयत्येषा ॥[4]

१६—घण्टारवरागलक्षणम्—

घण्टारवो धैवतजः प्रभाते सर्वदा तथा ॥
घण्टारागो गपूर्वः स्यान्न्यन्तः कोमलधैवतः ॥[5]

---

1. गीतप्रकाशः—पञ्चमोल्लासः ।
2. संगीतनारायणः—I—246 .
3. सङ्गीतमुक्तावली—II—139 .
4. सङ्गीतनारायणः—I—181 .
5. सङ्गीतमुक्तावली—II—143 .

( ध्यानम् )

प्रसरदिभवरस्य स्कन्धमारूढ़ उग्र—
स्कनकरुचिरमध्यं धूनयन् शर्वलाम्म् ।
प्रदलितरिपुसैन्यो भीमघण्टारवेण
स्फुरितकनककान्तिर्भाति घण्टारवोऽयम् ॥[1]

१७- छायानटरागलक्षणम्—

छायानटस्तु विज्ञेयः शङ्कराभरणस्वरैः ।
आरोहणे निवर्जः स्यादवरोहे गवर्जितः
धैवतोद्ग्राहसंभुक्तो रिन्यासोऽनेकमध्यमः ॥[2]

१८—तोड़ीरागलक्षणम्—

षड्जपूर्वा तु तोड़ी स्याद्यत्रोक्तौ कोमलौ रिधौ ।
न्यासः स्याद्धैवतस्तस्यां गान्धारांशेन शोभिता ।
मेनारोहे तूपन्यासा पञ्चमेनोभयोरपि ॥[3]

( ध्यानम् )

उन्निद्रपङ्केरुहचारुनेत्रा कुरङ्गशावं कलमाङ्कुरेण ।
सम्भावयन्ती विपिनोपकण्ठे तोड़ीयमिन्दीवरदामरम्या ॥[4]

---

1. सङ्गीतनारायणः—I—186 .
2. सङ्गीतपारिजातम्—पत्रम्—180 .
3. सङ्गीतपारिजातम् —पत्रम्—157 .
4. सङ्गीतमुक्तावली—II—134 .

१९—दीपकरागलक्षणम्—

आरोहे मनिवर्जः स्याद्दीपको मालवोत्थितः ।
गान्धारोद्ग्राहसंयुक्तः सन्यासांशविभूषितः ॥[1]

( ध्यानम् )

प्रदोषकाले गृहसंप्रविष्टो प्रदीपहस्तारुणगात्रवस्त्रा ।
सीमन्तसिन्दूरविराजमाना सुरक्तमाल्या किल दीपिकेयम् ॥[2]

२०—देशाख्यरागलक्षणम्—

रि तीव्रतरसंयुक्तो ग-तीव्रेणापि संयुतः ।
धग-वर्जोऽवरोहे स्याद्गान्धार स्वरमूर्च्छनः ।
तीव्रो यत्र निषादस्य देशाख्यः स विराजते ॥[3]

( ध्यानम् )

आस्फोटनाविष्कृतलोमहर्षो नियुद्धसंनद्ध वेशालबाहुः ।
प्रांशुप्रचण्डद्युतिहेमगौरो देशाख्यरागः स हि मल्लराजः ॥[4]

२१—देशीरागलक्षणम्—

रेवगुप्तोद्भवा देशी प-त्यक्ता मनि-विस्तरा ।
नि-न्यासांशग्रहा प्रातर्गेया करुणहास्ययोः ॥[5]

---

1. सङ्गीतपारिजातम्—पत्रम्—171
2. शब्दकल्पद्रुमः—४र्थो भागः—पत्रम्—112 .
3. सङ्गीतपारिजातम्—पत्रम्—135 .
4. सङ्गीतनारायणः—I—207 .
5. सङ्गीतमुक्तावली—II—161 .

( ध्यानम् )

गजपतिगतिरेणीलोचनेन्दीवराङ्गी
पृथुलतरनितम्बा लम्बवेणी भुजङ्गी ।
तनुवरतनुवल्ली वीतकौसुम्भवासा
इयमुदयति देशी रागिणी चारुहासा ॥[1]

२२ – धनाश्रीरागलक्षणम् –

आरोहे रिधहीना स्यात्पूर्णशुद्धस्वरैर्युता ।
गान्धारस्वरपूर्वा स्याद्धनाश्रीर्मध्यमान्तका[2] ॥

( ध्यानम् )

दूर्वादलश्यामतनुर्मनोज्ञा कान्तं लिखन्ती फलके विदग्धा ।
बाला गलल्लोचनवारिबिन्दुनिष्यन्दधौतस्तनहृद्धनाश्री ॥[3]

२३ – नटनारायणरागलक्षणम् –

धैवतांशग्रहन्यासो नटनारायणो दिवा[4] ॥

( ध्यानम् )

स्त्रीवेशधारी पुरुषो नवीनः सङ्गीतशाले श्रमिमादधानः ।
गायन् सतालं मलयं मनोज्ञः स्यान्नाटनारायण एष रागः ॥[5]

---

1. सङ्गीतमुक्तावली—II—162.
2. सङ्गीतपारिजातम्—पत्रम्—102.
3. सङ्गीतनारायणः—I—201.
4. सङ्गीतमुक्तावली—II—54.

२४—नादरामक्रियारागलक्षणम्—

नादरामक्रिया गौरीमेलोत्पन्ना स-भूषिता ।
षड्जोद्ग्राहा च निन्यासारोहे गान्धारवर्जिता ॥[1]

( ध्यानम् )

हेमप्रभा भासुरभूषणा च
नीलं निचोलं वपुषा वहन्ती ।
कान्ते समीपे कमनीयकण्ठा
मानोन्नता रामक्रिरी मतेयम् ॥[2]

२५—नारायणीगौड़ारागलक्षणम्—

हरिकाम्बोजमेलाच्च गान्धारेणापि चोज्झिता ।
नारायणीति षड्जांशा चाधा त्वधिरोहणे ॥[3]

२६—पूरवीरागलक्षणम्—

गौरीमेलसमुत्पन्ना षड्जोद्ग्राहसमन्विता ।
न्यासांश-ग-स्वरापेता पूर्वी सा सुखदायिनी ॥[4]

( ध्यानम् )

रहःसु कान्तं प्रेयमाणपत्रं रम्यं वहन्ती कुचकुम्भयुग्मे ।
दूर्वादलश्यामतनुः सकामा पुरातनैः सा पूरवी निरुक्ता ॥[5]

---

1. सङ्गीतमुक्तावली—¹¹—55 .
2. सङ्गीतपारिजातम्—पत्रम्—185 .
3. अप्रकाशित रागः३योभागः—पत्रम्—38 .
4. सङ्गीतपारिजातम्—पत्रम्—1⁰4
5. शब्दकल्पद्रुमः ४र्थोभागः—पत्रम्—111 .

२७—भिन्नषड् जरागलक्षणम् —

अपर: शुद्धज: प्रोक्त: सोडुवो भिन्नषड्जक: ।
मध्यरातौ सुशान्ते च मध्यमे गीयते बुधै: ॥[1]

२८—भूपालरागलक्षणम्—

मनिवर्जा तु भूपाल रिधौ यत्र च कोमलौ ।
गान्धारोद्ग्राहसंयुक्ता रिन्यासागांशशोभिता ॥[2]

( ध्यानम् )

स्वनायकं पुष्पलताधिरूढ़ा हसन्मुखी सर्वमुदं बहन्ती ।
स्वनानि शश्वद्वितनोति मुग्धा भूपालिका सा स्खलदुत्तरीया ॥[3]

२६—भैरवरागलक्षणम्—

धैवतांशग्रहन्यासयुक्त: स्याच्छुद्धभैरव: ।
सकम्पमन्द्रगान्धारो ज्ञेय: सम्पूर्णरागराट् ॥[4]

( ध्यानम )

सचन्द्रहासं फलकं दधानो निबद्धकक्षो दृढ़बद्धचूड़: ।
गतिं वितन्वन्बहुधा पदाति: प्रचण्डरूप: किल भैरवोऽयम् ॥[5]

---

1. अप्रकाशितराग: ३योभाग:—पत्रम्—23 .
2. सङ्गीतपारिजातम्—पत्रम्—145.
3. शब्दकल्पद्रुम:४र्थो भाग:—पत्रम—112 .
4. सङ्गीतमुक्तावली—II—26 .
5. सङ्गीतनारायण:—1—143 .

३० — भैरवीरागलक्षणम् —

मस्वरांशग्रहन्यासा भैरवी मान्द्र कोमला ।
रिगारोहे तूपन्यासा पञ्चमे नोभयोरपि ।
षड्जेनाथावरोहे तु सर्वदा सुखदायिनी ॥[1]

( ध्यानम् )

सरोवरस्था स्फटिकस्य मण्डपे
सरोरुहैः शङ्करमर्च्चयन्ती ।
तालप्रयोगैःप्रतिबद्धगीता—
गौरीतनुर्नारदभैरवीयम् ॥[2]

३१ — मङ्गलगुज्जरारागयोः लक्षणम् —

कौशिक्यां वोट्टरागे वा मङ्गलं मङ्गलैः पदैः ।
विलम्बितलये गेयं मङ्गलछन्दसाथवा ॥

× × ×

रिन्यासः रिमगाश्चैव सङ्गता निग्रहांशिका ।
षड्जान्ता गुर्ज्जरो पूर्णा भाषा मालवकैशिके ॥[3]

( ध्यानम् )

कर्णोत्पलालम्बिमधुव्रताली
शृणोति सा मञ्जुलकूजितानि ।
कान्तान्तिकं गन्तुमना प्रदोषे
सा गुर्जरीवेशकलोचिताङ्गी ॥[4]

---

1. सङ्गीतपारिजातम्—पत्रम्—143 .
2. सङ्गीतनारायणः—1—242 .
3. उत्कलसङ्गीतपद्धतिः—पत्रम्—234.
4. शब्दकल्पद्रुमः ४र्थो भागः—पत्रम्—112 .

३२ मध्यमादिरागलक्षणम् —

मध्यमादिर्मग्रहान्तो मध्यमग्रामगोचरः ।
अयं सायं तु गातव्यः शृङ्गारे विनिवर्जितः ॥[1]

( ध्यानम् )

अतितरुणवयःश्रीः कुन्दकर्पूरकान्ति
र्युवतिभजनदक्षः कौञ्चचाटूक्तिभाषः ।
अरुणजलजनेत्रः स्कन्धसंन्यस्तवीणः
स्मितमधुरवदनो राजते मध्यमादिः ॥[2]

३३—मल्लारीरागलक्षणम्—

गौरीमेलसमुद्भूता मल्लारीनिस्वरोज्झिता ।
आरोहणे गहीना स्यात् षड्जादिस्वरसम्मता ॥[3]
पञ्चमांशग्रहन्यासा ग-हीना चन्द्रमध्यमा ।
शृङ्गारे दुर्दिने गेया मल्हारी षाड्वी मता ॥[4]

( ध्यानम् )

विस्पष्टकृष्णाजिनमध्यवर्त्ती
कान्तः पवित्रः स्थविरोऽतिगौरः ।
कुर्वन्कथां तुम्बुरुनारदाभ्यां
मल्हारिकेयं कथिता कवीन्द्रैः ॥[5]

---

1. सङ्गीतमुक्तावली—II—183 .
2. सङ्गीतनारायणः—II—231 .
3. सङ्गीतपारिजातम्—पत्रम्—125 .
4. सङ्गीतमुक्तावली—II—24 .
5. सङ्गीतमुक्तावली —II—25 .

३४—मल्लाररागलक्षणम्—

धांशन्यासः पानुग्रहो मल्लारः सपवर्जितः ।
सदा वर्षास्वतुरसं गमन्द्रास्तारसप्तयः ॥[1]

( ध्यानम् )

शृङ्गावदातं पलितं दधानः प्रलम्बकर्णः कुमुदेन्दुवर्णः ।
कौपीनवासः शुचिहारधारी मल्लारराग: कथितस्तपस्वी ॥[2]

३५—मारुधनाश्रीरागयोः लक्षणम्—

तीव्रौ गमौ धनी चैव मृदुरि-धैवतषभौ ।
सम्वाद्विवादिनौ यत्र स मारु सायमीरितः ॥[3]
आरोहे रिधहीना स्यात्पूर्णशुद्धस्वरैर्युता ।
गान्धारस्वरपूर्वा स्याद्धनाश्रीर्मध्यमान्तिका ॥[4]

( ध्यानम् )

दूर्वादलश्यामतनुर्मनोज्ञा कान्तं लिखन्ती फलके विदग्धा ।
बाला गलल्लोचनवारिविन्दुनिष्यन्दधौतस्तनहृद्धनाश्री ॥[5]

---

1. सङ्गीतमुक्तावली—II—185.
2. सङ्गीतनारायणः—I—231.
3. उत्कलसङ्गीतपद्धति —पत्रम्—231.
4. सङ्गीतपारिजातम्—पत्रम्—102.
5. सङ्गीतनारायणः— —

३६ — मालवगौड़रागलक्षणम् —

अथ मालवगौलेऽस्मिन् गौरीस्वरसमुद्भवे ।
त्यक्त धे रि स्वरादुग्राहे नह्यारोहे सुगस्वरः ।
आरोहे यदि गान्धारः पादिमान्तो विधीयते ॥[1]

( ध्यानम् )

वीणाविनोदप्रतिपन्नपाणिगृह्णन् कथां नारदसंप्रयोगाम्
श्यामो युवा विप्रकूलप्रसूतः स मालगौ नाट्यमुनिप्रणीतः ॥
( मालगगौड़ = इति नामान्तरं पुस्तकान्तरे । )[2]

३७ — मालश्रीरागलक्षणम् —

मालवश्री शरद्गेया जातामालवकौशिकात् ।
एषा षड्जग्रहन्यासा पार्वतीप्रीतिकारिणी ॥[3]

( ध्यानम् )

लीलारविन्दस्य दलानि बाला विभावयन्ती तनुदेहयष्टिः ।
मालूरवृक्षस्य तलेनिषण्णा सा मालवश्री कथिता मुनीन्द्रैः ॥[4]

अपरश्च —

करावधूताम्बुजयुग्मरम्या इतस्ततश्चारु विलोकयन्ती ।
कण्ठस्फुरन्मौक्तिकचारुहारा सा मालसी संकथिता विचित्रा ॥[5]

---

1. सङ्गीतपारिजातम्—पत्रम्—177 .
2. सङ्गीतनारायणः—I—221 .
3. संगीतनारायणः—I—165 .
4. सङ्गीतमुक्तावली—II—75 .
5. सङ्गीतमुक्तावली—II—74 .

३८ – मुखारीरागलक्षणम् –

ऋषभः कोमलो यत्र गान्धारः पूर्वसंज्ञकः ।
मुखार्य्यां धैवतोद्ग्राहो निधो पूर्वाख्यकोमलौ ।
आरोहे गनि-हीनायां न्यासांशौ षड्जपञ्चमौ ॥[1]

( ध्यानम् )

देवपुष्पं करे धृत्वा तिष्ठत्येकान्तमन्दिरे ।
गीताभिनयविज्ञाता रक्तवर्णा मुखावरी ॥[2]

३९ – रामकिरीरागलक्षणम् –

रिकोमला ग-तीव्रा च यामतीव्रतरसंयुता ।
ध-कोमला नि-तीव्रा च ख्याता रामकिरीति सा ।
आरोहे मनिवर्जा स्यात्सप्तांशा धैवतमूर्च्छना ॥[3]

अपरश्च –

प्रहराभ्यन्तरे गेया षड्जन्यासग्रहांशका ।
षड्जषण्णघनारम्भा तज्ज्ञैः रामकृतिर्मता ॥[4]

( ध्यानम्

स्वर्णप्रभा भासुरभूषणा च नीलं निचोलं वपुषा वहन्ती ।
कान्तं पदोपान्तमुपागतेऽपि मानोन्नता रामकिरी प्रदिष्टा ।[5]

---

1. सङ्गीतपारिजातम्—पत्रम्—141.
2. सङ्गीतनारायणः—I—269 .
3. सङ्गीतपारिजातम्—पत्रम्—164.
4. सङ्गीतमुक्तावली—II—78.
5. संगीतनारायणः—I—173 .

४० - रेवगुप्तिरागलक्षणम्

रेवगुप्तिस्तथा षड्जमध्यमग्रामकोद्भवः ।
षड्जांशो मध्यमान्तो रसे वीरे नियुज्यते ॥[1]

( ध्यानम् )

अङ्के निषण्णां सुरतान्त खिन्नामाश्वासयन् स्वाञ्चलवीजनेन ।
सीमन्तिनीं श्वासचलत्कुचान्तां सुवर्णकान्तिः किल रेवगुप्तिः ॥[2]

४१ – ललितरागलक्षणम् –

या गौरीरागसम्भूता ललिता पञ्चमोज्झिता ।
सांशोद्ग्राहा तथा मान्ता गीतान्ते सा सुशोभना ॥[3]

( ध्यानम् )

प्रसन्नसप्तच्छदमालभारी युवातिगौरोलसल्लोचनश्रीः ॥
विनिसृतो वासगृहात् प्रभाते विलासवेशो ललिता प्रदिष्टा ॥[4]

४२—बङ्गालरागलक्षणम् –

बङ्गालः कौशिकीजातः षड्जन्यासग्रहांशकः ।
सकम्पमन्द्रगान्धारो गेयः करुणहास्ययोः ॥[5]

---

1. गीतप्रकाशः—पञ्चमोल्लासः
2. सङ्गीतनारायण—I—138.
3. सङ्गीतपारिजातम्—पत्रम्—171.
4. सङ्गीतमुक्तावली—II—45 .
5. सङ्गीतमुक्तावली—II—39

षाड्वादेत्र वङ्गालो ग्रहांशन्यासमध्यमः ।
प्रहर्षे विनियोक्तव्यः प्रोक्तः सोढ़लसूनुना ॥[1]

( ध्यानम् )

मनोज्ञमौञ्जीगुणगुम्फिताङ्गस्त्वचं दधानो धरणीरुहस्य ।
चण्डः कुमारः कमनीयमूर्त्तिर्वङ्गालरागः शुचिसामगानः ॥[2]

४३—वङ्गालगौड़रागयोर्लक्षणम्—

वङ्गाल शाश्वतिकः पूर्णः सांशग्रहश्च सन्यासः ।[3]

× × ×

निषादांशग्रहन्यासो गौड़ः स्यात्पञ्चमोज्झितः ।
वीरश्रृङ्गारयोर्गेयो दिनान्ते विरलर्षभः ॥[4]

( ध्यानम् )

भस्मावृता नरकपालधरा त्रिशूला
व्याघ्राम्बरा च कुपिता कुकुभेषु दीप्ता ।
रौद्रानना झटिति डिण्डिममारभन्ती
वङ्गालिका प्रथितभैरव भामिनी सा ॥[5]

---

1. सङ्गीतपारिजातम्—पञ्चम्—152.
2. सङ्गीतमुक्तावली—II—40.
3. सङ्गीतपारिजातम्—पञ्चम्—152.
4. सङ्गीतमुक्तावली—II—159 .
5. सङ्गीतपारिजातम्—पञ्चम्—154.

अपरश्च—

विधाय शम्भुं सुरनिम्नगातटे मुदार्च्चयन्नीलसरोजसंघैः ।
मनोज्ञमूर्त्तिर्दधदंशुके सिते त्वगासनस्थो द्विज एष गौड़कः ॥[1]

४४—वसन्तरागलक्षणम्—

षड्जमध्यमिकाजातः षड्जन्याशग्रहांशकः ।
गेयो वसन्तरागोऽयं वसन्तसमये बुधैः ॥[2]
षड्जादि मूर्च्छने मान्ते गनी तीव्रौ वसन्तके ॥[3]

( ध्यानम् )

शिखण्डिवर्हौच्चयबद्धचूड़ः पुष्णन् पिकं चूतलताङ्कुरेण ।
भ्रमन्मुदाराामविहारमूर्त्तिमंतो मतङ्गस्य वसन्तरागः ॥[4]

४५—बहुलारागलक्षणम्—

गौरीमेलसमुद्भूता बहुला मध्यमोदिता ।
स-वियोगं विना युक्ता गान्धारोद्ग्राहपांशका ॥[5]

४६—वेलावलीरागलक्षणम्—

वेलावल्यां गनो तीव्रौ मूर्च्छना याभिरुद्गता ।
आरोहे मनि नाबामंशः षड्जो बुधैः स्मृतः ।
अवरोहे ग-वर्जायां क्वचिद्गान्धारमूर्च्छना ॥[6]

---

1. सङ्गीतमुक्तावली—II—160 .
2. गीतप्रकाशः—पञ्चमोल्लासः (OSM—Mss. No. Mus—3)
3. सङ्गीतपारिजातम्—पत्रम्—130 .
4. सङ्गीतमुक्तावली—II—14 .
5. सङ्गीतपारिजातम्—पत्रम्—172 .
6. सङ्गीतपारिजातम्—पत्रम्—169 .

( ध्यानम् )

सङ्केतशिक्षां दयितस्य दत्ता वितन्वती मण्डनमङ्ग्यष्टेः ।
मुहुः स्मरन्तीस्मरमिष्टदेवं वेलावली नीलसरोजकान्तिः ॥[1]

४७—शङ्कराभरणरागलक्षणम्—

शङ्कराभरणे प्रोक्तौ गनी तीव्रौ तु स्यादिभे ।
ग-न्यासे मध्यमांशे च तालुकम्पः सुशोभते ॥[2]

( ध्यानम् )

व्याघ्रचर्मशकलं पिदधानो भोगिहारवलयाङ्गदभूषः ।
सान्द्रभूतिपरिलिप्तशरीरः शङ्कराभरण एष हि रागः ॥[3]

४८—शुद्धनाटलक्षणम्—

नाटे निशि शुचौ वीरे षड्जांशो गमकोत्कटः ।[4]

( ध्यानम् )

तुरङ्गमस्कन्धनिबद्धरागः स्वर्णप्रभः शोणितशोणगात्रः ।
संग्राममूमौ विचरन् धृतासिर्नाटोऽयमुक्तः किल काश्यपेन ॥[5]

---

1. सङ्गीतमुक्तावली—II—36 .
2. सङ्गीतपारिजातम्—पत्रम्—167 .
3. सङ्गीतमुक्तावली—II—148 .
4. सङ्गीतनारायण—I—182.
5. सङ्गीतमुक्तावली—II—142 .

४९ — शुद्धवराडीरागलक्षणम —

अथ शुद्धवराड्यां तु रिगौ कोमलपूर्वकौ ।
गस्तु तीव्रतरो धः स्यात्कोमलतीव्रनिस्वरः ।
धैवतोद्ग्राहयुक्तायां निमौ न्यासांशकौ स्मृतौ ॥[1]

(ध्यानम् )

विनोदयन्ती दयितं च गौरी सुकङ्कणा चामरचालनेन ।
कर्णे दधाना स्मरपुष्पगुच्छं वराङ्गनेयं कथिता वराडी ॥[2]

५० — शुद्धवङ्गालरागलक्षणम् —

वङ्गालः शाश्वतिकः पूर्णः सांशग्रहश्च सन्न्यासः ।
शुद्धवङ्गालः पूर्णः सांशन्यासग्रहो व्युष्टे ॥[3]

५१ — शुद्धवसन्तरागलक्षणम् —

षड्जादि मूर्च्छने मान्ते गनी तीव्रौ वसन्तके ।
शुद्धवसन्तमेले सरिसपधा अन्तरश्च काकलिका ॥[4]

५२ — श्रीरागलक्षणम् —

रि-त्रयोद्ग्राहसंयुक्तः षड्जोद्ग्राहोऽथवा मतः ।
श्रीरागस्तीव्र गान्धारः आरोहे ग-ध-वर्जितः ॥[5]

---

1. सङ्गीतपारिजातम्—पत्रम्—167.
2. सङ्गीतनारायणः—I—158.
3. सङ्गीतपारिजातम्—पत्रम्—152.
4. सङ्गीतपारिजातम्—पत्रम्—130.
5. सङ्गीतपारिजातम्—पत्रम्—183.

( ध्यानम् )

लीलावतारेण वनान्तराले
चिन्वन्प्रसूनानि वधूसहायः ।
विलासवेशोऽसितदिव्यमूर्त्तिः
श्रीराग एष प्रथितः मुनीन्द्रैः ॥[1]

५३—सोमवराड़ीरागयो लक्षणम्—

जातिन्यासग्रहांशेषु षाड्जो वीरे धनागमे ।
नि-तारः पनिवाहुल्यः सोमरागोऽत्र गीयते ॥[2]
प्रहरादूर्द्ध्वतो गेया भिन्नपञ्चमसम्भवा ।
षड्जन्यासग्रहांशैषा वराड़ी भरतोदिता ॥[3]

( ध्यानम् )

विनोदयन्ती दयितं च गौरी सुकङ्कणा चामरचालनेन ।
कर्णे दधाना सुरपुष्पगुच्छं वराङ्गनेयं कथिता वराड़ी ॥[4]

५४—सालंकनाटरागलक्षणम—

शङ्कराभरणोत्पन्ने गान्धारस्वरवर्जिते ।
अथ सालंकनाटेऽस्मिन् सन्यासांशसमन्विते ।
षड्जोद्ग्राहेण सम्पन्ने मधावारोहितौ स्मृतौ ॥[5]

---

1. सङ्गीतमुक्तावली—II—70 .
2. सङ्गीतमुक्तावली—II—125.
3 सङ्गीतनारायण:—I—157 .
4. सङ्गीतमुक्तावली—II—88 .
5. सङ्गीतपारिजातम्—पत्रम्— 179.

५५—सोमरागलक्षणम् –

षाड्जी जातिसमुत्पन्नः षड्जन्यासग्रहांशकः ।
नितारः परिवाहन्यो रसे वीरे नियुज्यते ।
मेघो छायागमे गेयः सोमराग मतः सताम् ॥[1]

( ध्यानम् )

निशाङ्गनां वक्षसि शाययित्वा कलङ्कदम्भात्सुरतश्रमार्त्तः ।
स्खलत्करः सालसलोचनश्रीः कामी सुधापाण्डर एष सोमः ॥[2]

५६—सौराष्ट्ररागलक्षणम्—

मायामालवमेलाच्च रागः सौराष्ट्रनामकः ।
सन्याससांसकं चैव स षड्जग्रहमुच्यते ।
आरोहे तु सुसम्पूर्णमवरोहे तथैव च ।
स रि ग म प ध नि स सनिधपमगरिस ॥[3]

५७—हिन्दोलरागलक्षणम्—

षड्जन्यासग्रहांशोऽयं हिन्दोलो रि-प-वर्जितः ।
अधैवतर्षभाद् जातो वीरशृङ्गारयोः सदा ॥[4]

( ध्यानम् )

नितम्बिनीमन्दतरङ्गितासु दोलासु खेलासुखमादधानः ।
सर्वैः कपोद्युतिकर्बूर श्री हिन्दोलरागः कथितो मुनीन्द्रैः ॥[5]

---

1. गीतप्रकाशः—पञ्चमोल्लासः .
2. सङ्गीतमुक्तावली —II—126 .
3. उत्कलसङ्गीतपद्धति —पत्रम्—245.
4. गीतप्रकाशः—पञ्चमोल्लासः .
5. सङ्गीतनारायणः—I—240 .

# रागनामानुक्रमणिका

# प्रबन्धानामनुक्रमणिका

## श्लोकानामनुक्रमणिका

# छन्दसामनुक्रमणिका

| छन्दसांनामानि | सर्गसंख्याः | श्लोकाङ्काः |
|---|---|---|
| अनुष्टुप् | १ | १५ |
| | ३ | १२ |
| | ४ | १२ |
| | ६ | १, २ |
| | ७ | ३, ५, ११ |
| | ६ | ११ |
| आर्य्या | १ | ७, १०, १७, १८ |
| | ३ | १, २, ८ |
| | ४ | ५ |
| | ५ | ५ |
| | ६ | ५ |
| | ७ | ७, १३ |
| | ८ | १२, १३ |
| | ६ | ४, ६ |
| | १० | १, ८ |
| इन्द्रवज्रा | १ | १४, |
| उपजाति | १ | ६, १२ |
| | २ | २, ७ |
| उपेन्द्रवज्रा | ७ | १६ |
| पुष्पिताग्रा | ४ | ६ |

| छन्दोसांनामानि | सर्गसंख्या | श्लोकाङ्काः |
|---|---|---|
| | ५ | १, १२ |
| पृथ्वी | ८ | ८ |
| प्रहर्षिणी | ४ | ३ |
| मन्दाक्रान्ता | २ | ६ |
| | ७ | १० |
| | ८ | ७ |
| | ६ | ७ |
| मालभारिणी | ६ | १० |
| | १० | ११ |
| मालिनी | १ | ३, ११, १३, २१ |
| | २ | ६, १० |
| | ३ | ४, १५ |
| | ४ | १, १०, ११ |
| | ८ | ४, १४ |
| | १० | १३, १५ |
| रथोद्धता | ३ | ३, ११ |
| | ४ | ६ |
| | ५ | १० |
| | ८ | ३, १०, १७ |
| | ६ | १ |
| | १० | ६, १०, १२ |
| वंशस्थविलम् | १ | २० |
| | ३ | १० |
| | ४ | ७, १५ |

| छन्दसां नामानि | सर्गसंख्या | श्लोकाङ्काः |
| --- | --- | --- |
| | ५ | ६ |
| | ७ | १ |
| | ८ | १, ५ |
| | १० | २ |
| वसन्ततिलकम् | १ | २, ५ |
| | ३ | ७, १३ |
| | ४ | २, ८ |
| | ५ | ३, ११ |
| | ६ | ३, ७, ८, १०, ११, १२ |
| | ९ | ३, ५, ८, १२, १३ |
| | १० | ३ |
| वियोगिनी | २ | १ |
| | ४ | ४ |
| शार्दूलविक्रीडितम् | १ | १, ४, ९ |
| | २ | ३, ४, ५, ८ |
| | ३ | ६ |
| | ५ | १३ |
| | ६ | ६ |
| | ७ | ४, ६, १२, १४, १५ |
| | ८ | २, ६, ९, ११, १६ |
| | ९ | २ ९ |
| | १० | ४, ७, ९, १६ |
| शिखरिणी | १ | १६, १९ |
| | ४ | १३, १६ |
| | ५ | ७, ८, ९, १४, |
| | ६ | ४, ९ |

| छन्दसां नामानि | सर्गसंख्या | श्लोकाङ्काः |
|---|---|---|
| | ७ | ८ |
| | ८ | १५ |
| | १० | ५ |
| स्वागता | १ | ८ |
| | ३ | ५ |
| | ४ | १४ |
| | ७ | ६ |
| | १० | १४ |
| हरिणी | ३ | ६, १४ |
| | ५ | २, ४ |
| | ६ | १२ |
| | ७ | २ |

—

# शुद्धिपत्रम्

| पत्रम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १४ | मुक्तम्मेनां | मुक्तिर्नमेनां |
| ३ | ४ | मच्चुनम् | मच्युतम् |
| ३ | १४ | विङ्निमत्र | विङ्निमत्त |
| ४ | २ | कल्किजन | कल्किन |
| ४ | ३ | मच्चुनम् | मच्युतम् |
| ५ | ४ | शाममणिबन्धम् | शुममणिबन्धम् |
| ६ | १० | विलुलदृवर | विलुलदृवर |
| ६ | १६ | कि मुधा | किं मुधा |
| ७ | २२ | रुचिरगण्डम् | रुचिरुचिरगण्डम् |
| ८ | ८ | स्फारमोतांशुरोचि | स्फारशीतांशुरोचि |
| ८ | ६ | चारामङ्गसङ्ग | चारा अङ्गसङ्गं |
| ६ | १४ | दिनमुखीं | दोनमुखीं |
| १२ | ३ | स चरत | स च तां |
| १३ | ३ | कलयसेऽलं | कलयतेऽलं |
| १४ | १४ | रोमावला | रोमावली |
| १६ | १० | विलसति—वोचते | विलसति—वीत्यते |
| १७ | १४ | स्वासान्मुश्चति | श्वासान्मुश्चति |
| १७ | २२ | अङ्गसङ्गीन | अङ्गसङ्गिन |
| २१ | ३ | तज्जयति | तर्जयति |
| २१ | ५ | निवशन्तीं | निवसन्तीम् |
| २३ | १८ | तनुसङ्गव | तनुसङ्गम |
| २४ | २ | उपचिनु | उपचिनुत |

| पत्रम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २४ | २२ | निह्नते | निह्नुते |
| २५ | ६ | गोड़ीरागेण | गौड़ीरागेण |
| २६ | १३ | पुनरनुपैतं | पुनरनुपैतुं |
| ३० | २ | मिकर | मीकर |
| ३० | ३ | शोकर | शीकर |
| ३० | ८ | मरघुनिम् | मरघुनिम् |
| ३० | १६ | चपलिमसम्मत | चपलिमसम्मत |
| ३१ | १० | नमोलन | निमीलन |
| ३७ | १५ | समुत्सुकां | समुत्सुका |
| ४१ | १६ | पल्लवकुलं | वल्लवकुलं |
| ४३ | ११ | रिषुकुलं | रिपुकुलं |
| ४४ | १७ | विप्रलब्धार्णने | विप्रलब्धावर्णने |
| ४६ | ३ | घारय | धारय |
| ४७ | १३ | उद्दामद्यु यतयः | उद्दामद्युतयः |
| ४६ | १३ | कुञ्जवने | कुञ्जवने |
| ५६ | ११ | किं सुधा | किं मुधा |
| ५६ | १६ | पल्लवरति | पल्लवरचित |
| ६० | ८ | यहि | याहि |
| ६१ | ७ | गम्भीरे | गभीरे |
| ६१ | १० | नृपपुषोत्तम | नृपपुरुषोत्तम |
| ६७ | ८ | कान्विगीकं | कान्दिशीकं |
| ६८ | १४ | रम्य | रम्यं |
| ७० | ३ | गीतते | गीयते |
| ७१ | १३ | दारुभजा | दारुणभंजा |
| ७१ | १८ | दानमशोकं | दीनमशोकं |
| ७१ | २० | घर्मजतापा | घर्मजतापा |
| ७३ | ४ | मुदुवल्ली | मृदुवल्ली |

| पत्रम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ७३ | ५ | तनुशोभ | तनुशोभावल्ली |
| ७६ | ५ | नरमुण्ठ | नरमुण्ड |
| ७६ | ६ | समयज.तिवसाने | समयजनितावसाने |
| ७६ | १६ | मुक्तण्ठै | मुक्तकण्ठै |
| ८० | २ | प्रेयसोकुलव | प्रेयसीकुल |
| ८० | ४ | उन्द्रगोप | इन्द्रगोप |
| ८० | १७ | रचितशाकुल | रचितशाकुन |
| ८६ | १३ | कर्णाट रागेण | पूरवीरागेण |
| ८८ | ३ | समुपगम् | समुपगतम् |
| ८६ | १८ | तरुणिमहित | तरुणिमाहित |
| ९० | १६ | सिप्रतितमः | सप्र.तितमः |
| ६२ | १६ | धृतगोत्र | धृतगोत्रं |
| ६२ | २० | दलितादिति | द.लितदिति |

---

# BIBLIOGRAPHY

SANSKRIT BOOKS—

1. Bhaktamala—by Chandra Datta, 1926
2. Gitagovinda—by Jaya Deva—(NSP-Edn), 1937
3. Sarasvati Vilasa—by Gajapati Prataparudra Deva—
   (O.L.P-Edn), 1927
4. Dasagrivavadhamahakavya—by Markandeya Mishra,
   (O S A-Edn), 1959
5. Chhandomanjari—by Ganga Dash, 19
6. Sahityadarpana—by Kaviraja Visvanatha,
   (C S.S.-Edn) 1967
7. Kumarasambhava—by Kalidasa,
   (New Delhi Navayuga Prakasan), 1966
8. Padyavali—Edited—by S. K. Dey, 1934,
9. Sangitanarayana—by Gajapati Jagannathanarayan Deva
   (OSA-Edn), 1966
10. Sangitamuktavali—by Harichandan
    (Utkal University Edn) 1955
11. Aprakashitaraga—by J. D. Patki, 1965
12. Sangitaparijata—by Ahivala Pandit, 3rd Edition, 1971
13. Sabdakalpadruma—by Raja Radhakanta Deva, 1961
14. Rasakalpadruma—Edited by B Acharya,
    (O S.A.-Edn), 1965

ORIYA BOOKS—

15. SriJaya Deva O Srigitagovinda—by Sri K. N. Mahapatra,
    1973
16. Chayani Chakada—Edited by Sudhakara Pattanaik,
    1959
17. Madalapanji—Edited by A. B. Mohanty, (Prachi Edn.)
18. Utkala Sangita Paddhati—by Shyama Sundar Dhir, 1964
19. Dardhyatabhakti—by Rama Das, 1935

MANUSCRIPTS—

20. Gopalarchanavidhi—OSM Mss. Dh. No 70
21. Bharatamrtamahakavya—OSM Mss. L. No. 14
22. Manimalanatika—OSM. Mss L. No. 58

OTHER BOOKS AND JOURNALS—

23. Indian Ephemeries—Vol. I Part-I, by S. K. Pilai 1922
24. Suryavamsi Gajapatis of Orissa—
by Dr. R. Subrahmaniyama.
25 A. Descriptive Catalogue of Sanskrit Manuscripts.
Vol. I, II Edited by Sri K. N. Mahapatra
(OSM & OSA Edn.) 1960
26. Journal of Asiatic Society, Bengal, Vol. LX II, 1893
27. Orissa Historical Research Journal, Vol. II, 1953
28. -do- Vol. IX, 1960
29. Journal of Kalinga Historical
Research Society, Vol. II, 1947
30. Govt. Oriental manuscript library Catalogue,
(No. 3826), 1918
31. Andhra Patrika—Annual,1928.

---

NSP—Nirnaya Sagara Press
OSA—Orissa Sahitya Akademi
OSM—Orissa State Museum
OLP—Oriental Library Publication